मालिका। स्वगतं। जइ एव्वं उत्तम्‌: तेणच्छुद्दा
रेण अरिकल्लिणिज्जाखु कुहुरणी मच्छ मइणजापेवि
क तथ मदंसणीयं (२) कुञलम्मि मम्म वाऊ णिव्विसेव
वत्थम्। संस्कृतमाश्रित्य।
आधि:कश्चन दारुणो वितनुते तद्दर्शनाद्द्य मां
मूर्च्छालां कलुषीकरोति कलुष ग्रामं विमोहो महान्।
धारावाहि तदेकगाहि किमपि ध्यानाद्वयं तायते
किं वाचा हृदयस्थितेन तदिदं तेनैव विध्नावते॥
नवमा। जनान्तिकं। कालिन्दि! पेच्छ एमाणिञ्जो
भट्टिदारिआए अणुराअप्पआरो। संस्कृतमाश्रित्य।
पातयति हृदयदेशे प्रियजनगर्भे पुन: पुनर्मुग्धा।
वर्धितमदनातङ्का वाष्पवतीं भावमन्थरां दृष्टिम्।

---

(२) कुक्कुलम्मि मर्कुवाधात् विभक्त तुषानलाधिवासात् निर्विशेषां विशेष मूर्च्छां वक्ष्यामित्यर्थः। अथवा यङ् कुकीर्ण मर्माग्निभागवास-निर्विशेषामित्यर्थः। कुकूलं यङ् वक्षीर्णे मुखे पुंसि तुषानले इति नानार्थ रत्नमाला।

आधिरिति। तद्दर्शनात् माहतदर्शनात् जात इति शेषः। दारुणः कश्चन आधिः मनोव्यथा अद्य मां मूर्च्छालां मूर्च्छावतीं प्राणिस्था-दातोलजन्यतरस्यामिति मूर्च्छाशब्दात् मत्वर्थे लच् प्रत्ययः। वितनुते महान् विमोहः दुःखानुचिन्तनोत्था विचित्तता विषयि ग्रामं इन्द्रियस-मूहं कलुषी करोति अन्नानभ्रमाघात घूर्णनाऽदर्शनादिभिः क्षुब्धं कुरुते त्यर्थः। यदुक्तं मोहोविचित्तता भीति दुःखावेशानुचिन्तनैः तत्रा-न्नानभ्रमाघातघूर्णनादर्शनादय इति।

धारावाहि एकस्य तदेकः तं गाहते प्राप्नुते इति तदेकगाहि

मारुतेतरविस्तुसमित्यर्थः। धारावाहि बलिकाकारवत् विच्छित्ति राहित्येन एकाकार प्रसरणशीलं ज्ञानाख्यं अद्वितीयमन्नं कर्तृ एकमेव ज्ञात्मकमिति यावत्। किमपि अनिर्वचनीयत्वेन तायते विस्तृतं भवति। ताय् सन्तानपालनयोरित्यनुदात्ते तो धातोः कर्त्तर्यात्मनेपदाल्लुट्। वाचा वचनेन किं प्रयोजनमित्यर्थः। अत्र कारणमाह तदिदं अक्रमविषमित्यर्थः। हृदयस्थितेन इदं वाभिप्रायविशेषणं। तेन मारुतेन विज्ञाय तयेव। अनवरत निज हृदयाधिष्ठितेन मारुतेन स्वाधिष्ठानदुरवस्थाया स्वतो विज्ञायमानत्वात् स्वयमपि तत् प्रपञ्चने पिष्टपेषण न्यायेन प्रयोजनाभाव इति भावः। अथवा किं वाचा कथनेन किं प्रयोजनं इत्यर्थः वक्तुमशक्यत्वादिति भावः। तर्हि तत् कथं बोध्यमित्यत आह तदिदं हृदय स्थितेन तेनैव विज्ञायते इदं हृदयदौरवस्थ्यं हृदयवर्त्तित्वात्तेनैव मारुतेन विना न केऽप्यन्ये न बोधं शक्यमिति भावः। इह हृदयस्थितेन तेन इत्युक्त्या मनसाहृत कान्तत्वमुक्तम्। तदेकगाढीत्यनेन आत्मारामत्वञ्च विषयिग्रामं कन्नु मोक्ष्योति इत्युक्त्या प्रयोजनान्तरपरित्यागश्च। इत्यञ्च हङ्मनःसङ्गसङ्कल्पजागराः कृशता रतिः ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेत्युक्तासु दशसु अवस्थासु मनःसङ्गाख्यद्वितीया मदनावस्था प्रतिपादिता विद्यानाथादयस्तु द्वादशधा स्मरावस्थेत्याहुः रतिरहस्यापर नाम्नि स्मृङ्गार प्रबन्धप्रदीपे तु एकादशधा स्मरावस्थेति हरिहरः। तत्तन्मते तु तत्तद्वचनानुसारेण कल्पनीयं मनःसङ्गावस्था लक्षणन्तु। मनसाहृतकान्ताय विरक्तान्य प्रयोजनम्। आत्मारामा भवेद्यत्र चित्त सङ्गरतिर्यथेति। न च मूर्च्छात्वादुग्रत्नया तत्तन्नामक मदनावस्थावत्त्वं शङ्क्यं तत्र प्रयोजनान्तर वैतृष्ण्य सद्भावेऽपि सम्प्रति प्रतिपादितयोः मनोहृतकान्तत्वात्मारामत्वयोः अभावात् किञ्च मूर्च्छा मोहयोः परस्पर किञ्चिद्भेदभिन्नयोः गुणयोः मनःसङ्गावस्थायामीष्टवस्तु गुणकीर्त्तनादि जन्यत्वेनोपपत्ति सद्भावात्। यथोक्तं रत्नाकरे। वियोगायोगयोरिष्टगुणानां कीर्त्तनात् स्मृतेः साक्षात्कारोऽथवा मूर्च्छा दशधा जायते यथेति। तथा मूर्च्छा मोह शब्दयोः तत्तन्नामकावस्था वाचकत्वे मूर्च्छावस्था प्रतिपादनानन्तरं ततोऽपि प्रथमाया मोहावस्थाया अत्र प्रतिपादितत्वेन

सविषादम्। का एत्थ पड़िवत्ती। एदाए उण धीर: पत्थ सक्खु उब्बसो एसो मअणावेसो।

प्रकाशं। सहि! णं एसो भावणा मात्तओ हिअअं मि णिट्ठइ।

मल्लिका। सह ज्जो हृत्थि! हृत्थि! किं भावणा मात्तओ एव्व अहं खु मूढ़ा तक्के मि सच्चो एसोत्ति। सनिश्वासं। अवि णाम दक्खिस्सं अअलङ्कहरिणङ्क सुन्दरं पुणोवि तस्स मुहविम्वम्।

नव। सहि! मा खु एव्वं काअरा होहि णं पड़िच्छन्द दंसणादि हिंसुलहं मणो विणोदणं उक्कण्ठिअस्स जणस्स।

कालिन्दी। सच्चं मन्ते दि णोमालिआणं पियजणुक्कण्ठा तत्तिल्ल चित्ताणं तग्गुणवसणं तव्भुसणलाहो तप्पड़िच्छन्द दंसणं ति महन्तो आलम्बो।

मल्लिका। कहं णाम लिहज्जदु करअलेणावआव उणो एसो पहाण माणस सङ्गसंवादिसुन्दरस्स तस्स पडिच्छंदो। अहवा जहसत्ति लिहिस्सं आणेहि चित्तमालादो सवणिअं चित्तफलअम्।

नव। तह। इति उत्थातुमिच्छति।

प्रविश्य प्रतिहारी।

प्रतिहा। एसा दन्दकरणहत्था भअवईए मन्दाइणीए विअ सिस्सा सारसिआ।

---

पौर्वापर्य्य व्यतिक्रमदोषापत्तेश्च इत्यन्येऽपि विशेषाः सम्यगूह्याः विस्तरभयाव् विरम्यते।

मल्लिका। कीस अविलम्बिअं ण पविसदि।

निष्क्रान्ता प्रतिहारी।

हला हला हि खणं चिट्ठ।

ततः प्रविशति सारसिका।

सार। सच्चं कहिअं भअवदीए मल्लिआ उत्तन्द वसणं चिन्तिअत्ति एदस्स दिव्वं वरस्स आअमणम्। अव्वो रक्ख उद्दत्थगअन्ति सुणिअ वेवन्ति मे अङ्गाइं। सस्मरणम्। जं ण दिट्ठो सीमन्तमणी जस्स फस्स मेत्तेण मुच्छन्तीणं अणालाहो होइत्ति उवदिट्ठं भअवदीए। पुरो विलोक्य सानन्दम्।

एसा खु इह वइ आगच्छिआ अग्गदो वट्टइ मल्लिआ। निर्वर्ण्य। हुं माला पदे हाखरा अहि सित्ती सच्चं कहिअं भअवदीए। मल्लिआए आआरेहिं तुह्मिओ एव्व सर विआरोत्ति। संस्कृतमाश्रित्य।

ललितमधुरैः सेयं सद्यस्फुटद्दलकेतकी
कपिशधवलैर्वक्त्रे वाङ्गैः स्मराभिभवं नवम्।
भवतु सफलः सर्गक्लेशो विधातुरनुत्तमः
समुचितवरप्राप्त्या रमन्तु च बान्धवाः। (४)

---

(४) ललित मधुरैरिति। ललित मधुरैः ग्लान मनोहरैरित्यर्थः। केतकीनां पुष्पाणि केतक्यः पुष्पमूलेषु बहुलमिति लुप्। केतकी तु श्वेत-केतकी स्वर्णकेतकी चेति द्विविधा तयोरत्र स्वर्णकेतक्याः विवक्षा श्वेत-केतकीत्वे सर्वथाऽसम्भाव्यकपिशवर्णस्य तत्कुसुमस्य केवलधवलत्वात् प्रस्तुत साधारणधर्मभूतकपिश धवलत्वैश्विष्ट्याऽभावेन उपमानत्वविरोधापातः सद्य स्फुटन्ति तत्कालविकासीनि दलानि यासां तास्ता ताः केतक्यस्ता इव

मल्लिका। स्वगतम्। हन्त दुल्लहजणाहिणिवेसिणी मह पञ्चाशा।

सार। पुणा भअवईए आसीसाहिम्।

---

इति लुप्तोपमा। कपिशधवलैः श्यावशुक्लैः स्वतः कपिशत्वं चार-मोदया किञ्चित् पाण्डुत्वञ्चेति भावः। एवञ्चुपमानपक्षेऽपि स्वतः कपिशत्वं सद्यः स्फुटनात्मकोपाधिवशात् किञ्चित् पाण्डुत्वञ्च अतएव तत्र सद्यः स्फुटद्दलविशेषणम्। तेषां चिरस्फुटित दलत्वे केवलक-पिशत्वात्। अङ्गैः अवयवैः नवं चाराभिभवं नूतन चारपीडां वक्त्रेव चाराभि भवस्य चिरन्तनत्वे अङ्गानां केवल धावल्यसम्भवेन कपिश-त्वाभावप्रसङ्ग इति भावः। तथा च भगवत्युक्तं सत्यमिति भावः। एवं चारविकारस्य सत्यत्वोपलम्भे सति तत्प्रयोजनमाशास्ते भवत्विति समुचितोऽनुगुणो यो वरो मारुतरूपो जामाता तस्य प्राप्त्या हेतुना विधातुः अनुत्तमोऽसदृशः अति महानिति यावत् सर्गक्लेशः मल्लिकासृष्टिविषयक प्रयासः सफलः सप्रयोजनो भवतु भूधातोरभीष्टार्थे लोट्। तथा च प्रयोजन प्राप्त्या श्लाघ्यो भवत्विति निष्कर्षः प्रयो-जन प्राप्त्यभावे तु विधेरनायास सृष्टिभूतानां तृण पिपीलिकादिनि खिलवस्तुनामपि साफल्ये सति सौन्दर्य्यातिशय तर्क्यमाणाऽसदृश प्रयास प्रयोज्यस्य मल्लिका सर्गस्य वैफल्यापात इति महानियतकालोपार्ज्जित प्रतिष्ठासम्भाजकः परीवादनवावतारोऽस्या भविष्यदिति भावः। किंवा स फलोभोगयुक्तः सुखरूप इति यावत् फलमित्यमरे सस्ये फलके जाती-फले धने फाले। भोगे वीजे लाभे इति नानार्थरत्नमाला। एवञ्च वस्तुनि चिराभिलषिते इति पद्योक्त न्यायेन विधेः स्वकीय महाप्रयास प्रयोज्यमल्लिकासर्गानुगुणवरत्वेन चिराभिलषितस्य मारुतरूपस्य वस्तुनः कथमपि भाग्यवशेन प्राप्त्या प्राक् मल्लिकासर्गार्थं सम्भावित महाप्रया-सोऽपि सुखरूपतामेष्यत्विति भावः। च किञ्चेत्यर्थः। समुचितवरप्रा-प्त्येति काकाक्षिन्यायेन अत्राप्यन्वयः। बान्धवाः रमन्तु ईदृशकुलीनत्वा-

मल्लिका । सानन्दम् । का ।

सारसि । णं तुमं एव्व ।

मल्लिका । एहि सारसिए किं णाआसि अदि ।

सारसि । एक्कसरिअं । तव्वत्ति एक्कवट्टइ भअवई दिवसिदं अ एदं अम्बर गवभिणं तद्दन्तकरण्डअम् ।

इति मल्लिकाया हस्ते ददाति ।

मल्लिका । सबहुमानमादत्ते ।

नव । सहि ! कहिदं एदस्स आअमणं धाराधरं मि आअदाए पवालिआए भट्टिणो अमच्चस्स रअणवदूणा सिम्हलदीवाणीअं वाहुडीकिअन्ति ।

सारसि । सच्चं एदं एव्व ।

मल्लिका । अज्ज कहिं वट्टइ भअवई ।

सारसि । अन्ते उरंमि देवीए सविहे अमच्चस्स मुहादो किंवि सुणन्ती वट्टइ ।

नवमा । मस्से तं एव्व कोलीणं भट्टिदारिअं संवरओ राअमुहेण पत्थेदित्ति ।

मल्लिका । । सजुगुप्सं स्वगतम् । जं कहं मं अस्सो जणो पत्थेदि ।

सारसि । ता अणुमस्सेदुं मं पिअसही ।

मल्लिका । सहि ! ण पारेमि वारिदुं भअवईए सविहं गच्छसित्ति । निष्क्रान्ता सारसिका ।

---

विशिष्टानुगुणवरलाभेन सूत्रन्त्वित्यर्थः । बान्धवाः कुलमिच्छन्ति इति वर्णनादिति भावः ।

मल्लिका। सहि ! णाणेहिं दाणिं विस्तफलअम्।

नवमा। भअवईए पेसिदं अम्बरं दट्ठुण्‌ भंसि आ-
णइस्सम्। इति करण्डकमादाय विघटय्य दुकूलमुद्धरति। सस्मितम्।
अम्हे हि उव्भिज्जन्तवालकदली गव्भपल्लवणिव्विसेस
मादुको एदस्स फंसो। सहर्षम्। भट्टिदारिआ कुम-
लालिआए मालिआए विअ परिमलो एदस्स। विस्तारयति।

कालिन्दी। विलोक्य। सकौतुकं। सहि ! वेरत्ते चित्तं
वि दीसइ। निर्वर्ण्य। ण केवलं चित्तमेत्तं पिअसहि ! वेच्छ
वेच्छ आअस्स दीहरेहिं णअणेहिं महाभाओ एव्व आलि
हिओ।

मल्लिका। सविस्मयानन्दाभिलाषम्। आलोक्य।

सहि णोमालिए ! सो एव्व। संस्कृतमाश्रित्य।

तद्वक्त्रं श्रवणान्तचुम्बिनयनं सा बन्धुरा कन्धरा
तावाजानुविलम्बिनौ मरकतस्तम्भाभिरामौ भुजौ।

तद्वक्षो विपुलम् वलितं। सएष सहजो हारोऽ-
प्यमुष्मिन्नहो

तावूरू करिराजहस्तरुचिरौ ते एव ताम्रे पदे॥

निर्वर्ण्य। हला एत्तिओ एव्व भेदो गअणिमिसाहिं
अच्छीहिं एसो दिव्वपुरुसो सो माणुसोत्ति।

नवमा। चित्रं निर्वर्ण्य। सहि ! एसा भट्टिदारिआए
हत्थ विस्साणवे अत्थिं अणुहरइ रमणिज्जा णिम्माण लेहा।

मल्लिका। सोत्कण्ठा करुणम्। स्वगतम्। पच्चभिस्सा

विअ एदस्सिम्। पुनर्निर्वर्ण्य। सहीओ पेच्छइ।

एदस्स काएवि महाभाआए उवरि सहूरारूढ़ गाढु-

कण्ठा पिसुणो आअदो । संस्कृतमाश्रित्य ।

बर्हान्तरेण विसकाण्डसहोदरेण

स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।

प्रध्यायतीव किमपि श्वसिता निलेन

बिम्बाधरोऽपि कुरु विन्दरुचाभिरामः ।

अनिर्वेदम् । हन्त मूलंमि लूणो सव्वोवअण संभिल

पिक्को पच्चासालदांकुरो । अण्णा खु सा पुण्ण भाइणी जाए

सो महाभाओ बालचन्दलापण्डरे हिं अङ्गेहिं अक्खरं

कहेइ । णिक्कलुणा असा जाइमससिं देरिसावत्थे उदासीणा होइ । मदनपीड़ां नाटयन्ती सखेदं निश्वस्य । मुद्ध

हिअअ ! कीस अणसंकंत माणसे जणे पुणो पुणो णिवधसि माणाइ इणं मज्झ अज्जवि निप्फलमणोरह विसस्वदस्स तुह कहिं णु गआ तारिसी लज्जा । अहवा मम्महो एव्व

उवालंभणिज्जो । जेण तुमं एव्वं तिक्खतिक्खेहिं

वाणेहिं तथ्विं जणे दिढ़ं कीलिअं सि । आकाशे । भअवं

अवलाजण दंसिअ भुअसुंडीर सार मम्मह भीअणोसि

तुमं णअर चलादिम्बभुअदण्डमण्डणाहो , महाभाआदो

जेण पलाअणल भीषणा मह हिअअं विप्पअन्ता वि तहिं

चित्त अट्ठिए तुह रवलच्छी कुम्भीलेण तथ्विं जणेण ण

णिवसवसती तुज्झ मग्गणा अवणि पड्डिअ जेण काएवि

अट्ठे मुद्ध महुर पण्डर गण्डमूलो लक्खिज्जइ एसो ।

इति बाष्पं निवर्णयति ।

कालिन्दी । सकरुणम् । जनान्तिकम् । अहो एदाए वेआरि सखो । संस्कृतमाश्रित्य ।

(५) चित्रदयितेऽपि तैस्तैराकारैरन्य सङ्ग शङ्किन्याः
अस्या रोष विषाद व्रीडोत्कण्ठा परिप्लुते नयने । ८ ।

प्रकाशम् । सहि । जइ अवसिदं चित्तकम्मं वअणं ता अहंवि किंवि पण्णिस्सम् ।

मल्लिका । स्वगतम् । मण्णे एसा सिणेहमेत्तदंसिणी आ-आसणे पवट्टइ । प्रकाशम् । कालिन्दि ! किंविअ ।

कालिन्दी ! अहं खु तक्केमि केणविहत्थविण्णाणेवुत्तं पआसइदुकामेण णिअबुद्धि मेत्तकप्पिओ कोवि लिहिओ घुणक्खरणायेण उण महाभाआ हिदीए संवादो जाओत्ति ।

मल्लिका । ण खुट्ठु दिट्ठं तुए काएवि महाभाअ दंसण परवस हिअआए णिओक्कण्ठाविणोदण साहणं समाणुराअस्स तस्स पडिरूवं यथासुए लिहिअन्ति भणिदव्वं ण एत्थ लोअणा अज्जवि दीसन्दि णअण पडि-आवाह णीसालिया अज्जणविन्दुणी ।

कालिन्दी । सहि ! णआभिट्टइ एदं कहिंणु दिव्वं

---

(५) चित्रदयितेऽपीति । चित्रदयितेऽपि आलेख्यमात्रात्मक नायकेऽपीत्यर्थः । न तु यथार्थनायके इत्यर्थः । शङ्कया अत्यन्ताऽविषये इति भावः तैस्तैः पाण्डुरगण्डमूलत्वादि लक्षणोपलक्षितैः आकारैः अन्यसङ्ग-शङ्किन्याः स्वेतरनायिका सम्पर्कमाशङ्कमानायाः इत्यर्थः । अन्यस्याः सङ्ग इत्यत्र सर्वनाम्नो वृत्ति मात्रे इति अन्यशब्दस्य पुंवद्भावः । अस्याः नयने रोषविषादव्रीडोत्कण्ठापरिप्लुते अन्यसङ्ग शङ्कयारोषः किमत्र कर्त्तव्य-मिति विषादः । ईदृगाशयस्फुटीभावे सख्यः पश्यन्त्विति व्रीडा । प्राणदयित इत्युत्कण्ठा । एताभिः परिप्लुते सम्भृतेस्ताः इति शेषः ।

दूरे वंसस्स होज्ज महाभाअस्स कावि अविअ पञ्च-
विअ अ एदं णं कण्ठइचिअ मसुए दिट्ठो ण उण तारा-
एव्वं त्तिह पडिलो । सचिन्तम् । दाणिं होइअ ।

मल्लिका । स्वगतम् । जुत्तिजुत्तम् । इमाइ एदाए वअणाइ-
हिअअं ईसिससा सही णिहि । प्रकाशम् ।

कालिन्दि ! अत्थु आकिदि संवादो कहं दीवन्तरट्ठि-
एण चित्तसिप्पिणा एसो हार मज्झम्मि महिंद मणीवि-
लसिओ ।

कालिन्दी । विहस्य । ण जुज्जइ अड्ढ जरई णाओ
अड्ढसन्दइ अड्ढक्खे त्ति वेच्छ । संस्कृतमाश्रित्य ।

सत्कवीन्द्र मतिवत् यदृच्छया चित्रशिल्पिकरवर्णतूलिका ।
तत्तदुल्लिखितु मप्यलक्षितं वस्तुतत्वमखिलं प्रगल्भते ॥ ६ ॥

मल्लिका । सवितर्कम् । इत्थि सन्देह डोलाएहिं दोल-

---

(६) कथं द्वीपान्तरस्थितेन चित्र शिल्पिना एष हारमध्य महेन्द्रमणि-
विलिखित इति मल्लिकायाः शङ्कां दृष्टान्तमुखेन समुच्छिनत्ति ।

सत्कवीन्द्रेति । चित्रशिल्पिनः करे विद्यमाना वर्ण तूलिका
लेखनी चित्रशिल्पकर वर्ण तूलिका कर्त्री सत्कवीन्द्रमतिवत् महाक[illegible]
प्रश्नेव अलक्षितं अदृष्टमपि तत्तत् उल्लिखितं अखिलं वस्तु कर्म त[illegible]
सत्यभूतं स्वस्वगुणाव्यवहितमिति यावत् इति विधेय विशेषणं [illegible]
वस्तुतत्वमित्येकपदं वस्तुस्वरूपमित्यर्थः । तत्वं स्वरूपे परमात्मनि इ[illegible]
मेदिनी यदृच्छया प्रयत्नेन विना उल्लिखितं कचित् फलकादौ वि[illegible]
खितुं उल्लेखविषयीकर्त्तुं प्रगल्भते प्रभवति सत्कवीन्द्रमतेरिव [illegible]
शिल्पिकर वर्णतूलिकाया अपि अदृष्टचर वस्तुतत्त्वोल्लेखने अनाय[illegible]
निपुणत्वेन तत्र तदीयशङ्काया अनवकाश इति भावः । पूर्णोपमालङ्कार

[illegible]हरम्स कमसवि वड्ढक्खम्स ईट्ठठठके वाहाय
[illegible]ट्ठ पड्ढिट्ठ विग्रं मग्गवट्टठ्ठेहिं [illegible] ह्रिट्ठन्ति।
[illegible] विजयं नाटयन्ति।

कालिन्दी। जनान्तिकम्। मसे तं एव्व दृढं दिव्वं वरम्।

प्रकाशम्। तदो तदो।

भ्रमरकः। तदो भदृसिमदिव्वं वरो एव्व गहिगहिअ
परितोसिओ जहेच्छं गओसो रअणवई।

सर्व्वाः। स्वगतम्। गओ संसओ।

कालिन्दी। तदोतदो।

भ्रमरकः। अह वअलेण भद्दिणा मह हत्ते पेसिअं
तं रअण जलिअं दट्ठुण णाहमाइओ सहत्येण गणिअ
तं चित्तकसअं विह्मआणंदसिवभरेहिं ण अणेहिं विअट्ट
पुंडरीअदल माला जालेहिंविअ अच्चअंदो संजाय पच्च-
भिज्जो चिरंठिओ।

मल्लिका। सनिर्वेदं निश्वस्य। स्वगतं। हन्त मह जीविआलं
वणं मणोरह मज्ज दज्जो तुम्ह जलंजली। जनान्तिकम्।
कालिन्दि! विसंवदिआ तुह उववत्तीओ।

कालिन्दी। जनान्तिकं। सहि! वअण सेसं असुणिअ
कीसि तम्मसि। प्रकाशं। तदो तदो।

भ्रमरकः। तदोअ तं कणअं सच्चं मणन्तो सीमन्तवदे
तंमणिं करअलेण पुणो पुणो विहितवन्दो।

मल्लिका। जनान्तिकं। सुदं वअण सेसंवि।

मदना। स्वगतं। भअवं मन्दाउत्तं खिदं सुहहिअअं

कुलक्खग्रा जणं तस्सिं महाभाए दिठ लग्गहिग्रग्रं काए
विग्र तं उण ग्रखि संकामेसि ।

कालिन्दी । स्वगतं । किं णु खु एदं । ग्रहवा ग्रसं पु
एव्व वग्रणं । प्रकाशं । ग्रहो महंतो खु ग्रणुराग्रो मा
जणे महाभाग्रस्स । ग्रह काए विग्र तीए ग्राकिदी ।

मल्लिका । सागूतं शृणोति । एदं हंसमग्रं सुणोमि
काएवि तीए सरिसी णात्थित्ति ।

मल्लिका । सनिश्वासं । स्वगतं । ग्रदो खु महाभाग्र
लोग्रणाणं ग्रणुरुहा (ग्रनर्हा) । जाग्रह्मि ।

कालिन्दी । कीस एदहंसमग्रंति सासंकं विग्र वग्रणं ।

भ्रमरकः । एत्ताणे उण । इत्यर्धोक्ते । उद्दग्राणु इ
ण जाणीग्रदि जह दिट्ठं भणामि ।

मल्लिका । निर्दिश्य । एमेग्र वट्टइ ।

मल्लिका । सोच्छ्वासं । दिट्ठिग्रा वरिच्छवग्रं पि ग्रारो
विग्रह्मि ।

उभे । जनान्तिकं । सहि ! दिट्ठिग्रा वड्ढामो तुमं
एव्व तहिं ग्रालिहिदा ।

मल्लिका । कहं सारिस्स मेत्तेण ग्रहन्ति भणीग्रदि ।

कालिन्दी । तुमं दट्ठुणा ग्रणाए वडिढव्वं महाभाग्रो
ण वेच्छ इत्ति ।

मल्लिका । ग्रहो सिणेहो ।

कालिन्दी । प्रकाशं । भमरग्र ! किं एत्थ ग्रणुइग्रं णहि
ग्रग्गि सह उवारिए जोहाढज्जइ णं ग्राकिइ सारिसं होइ ।

भ्रमरकः। ण ण वर सारिसमेत्ति सच्चं तत्तहोदीए एव्व अज्ज णाहस्स दिण्णाए मालिआए हं लिहिदा। सर्वो अपि स्वयं नाटयन्ति।

कालिन्दी। जनान्तिकं। सहि! किं अज्जवि सारिस्स मेत्ति।

मल्लिका। सानन्दं। सहि! कहं दीवन्दरे महपड़िच्छदो।

कालिन्दी। जह महाभाअस्स। प्रकाशं। अचिरं एद्द तदो तदो।

भ्रमरकः। तदोअ पियमित्तेण णाह कलअण्ठेण ण एसा सच्चेत्ति णिवारिए णिवुत्तो सीमन्त मणि णिवेस पआसादो महाभाआए एव्व जोग्गोत्ति अहं एदस्स दाणे आणत्तोम्हि। इति मणिमम्बराद्वुत्कृत्य कालिन्दी हस्ते समर्पयति।

कालिन्दी। भमरअ! परवई खु अम्हाणं पिअसही महाभाएण ता जह णिद्दिट्ठ करम्ह। इति मणिमादाय मल्लिकायाः प्रदर्शयन्ती। जनान्तिकं। संस्कृतमाश्रित्य।

तदिदं हाटक सूत्र स्यूतं सखि! पाटलं रत्नं।
प्रेषित मनुराग धरं मन इव सारेणुणा विश्वं॥ (७)॥

मल्लिका। सोत्कण्ठमालोकयति।

नेपथ्ये।

---

(७) तदिदमिति। हे सखि मल्लिके! सारेणुना विद्यं अतएव अनुरागधरं त्वद्विषयकरागयुक्तं रक्तवर्णयुतञ्च सूत्रं शरीरविशिष्टं मनःचित्तं निवसितमित्युत्प्रेक्षा। हाटकसूत्र स्यूतं पाटलं तदिदं रत्नं प्रेषित मित्यन्वयः।

एषा सम्प्रति चक्रवाकरमणी दृष्ट्वा मिलद्दाप्यया
पश्यन्ती चरम क्ष्माधर तटी सीमन्त रत्नं रविं ।
संप्राप्तेव भवान्तरं शिव शिव व्यामुह्यता चेतसा
पार्श्वस्थस्य न वेत्ति वल्लभ महो शापस्य दुर्लङ्घता । (८)

सर्वे आकर्णयति ।

मल्लिका । स्वगतं । हन्त अहं त्रिय्र तवस्विणी चक्कवाईवि ।

पुनर्नेपथ्ये ।

त्यज चक्रवाकि ! शोकं वधान धैर्य्यं सहस्व समयमसुं ।
अयमेव वासरमणि र्हरिष्यते शाप मूर्च्छान्ते । (९)

---

(८) एषेति । सम्प्रति एषा चक्रवाकरमणी चक्रवाकी स्त्रीलिङ्गात् मल्लिकेति च ध्वनिः । मिलद्दाप्यया दृष्ट्वा चरमक्ष्माधरतट्या सीमन्तरत्नं शिरोमणीभूतं शिरोमणिस्य रविं पश्यन्ती सती अन्यत् जन्म संप्राप्तेवेत्युत्प्रेक्षा । शिव शिव इति खेदे व्यामुह्यता मोहं प्राप्नुवता विज्ञानपाटव शून्येनेति यावत् । चेतसा पार्श्वस्थस्य समीपवर्त्तिनमपि वल्लभं चक्रवाकं प्राणदयितं भावतस्य न वेत्ति न जानाति शापस्य दुर्लङ्घता अहो अद्भुतमित्यर्थः । अत्र प्रस्तुतसन्ध्याकालिक चक्रवाकी वृत्तान्तवर्णनेन प्रस्तुत एव सीमन्तमणि दर्शनादि मल्लिकावृत्तान्तोद्योतित इति प्रस्तुताङ्कुरालङ्कारः । प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुर इति लक्षणात् ।

(९)त्यजेति । हे चक्रवाकि ! स्त्रीलिङ्गात् मल्लिकासम्बन्धेन ध्वनिः शोकं त्यज धैर्यं वधान अमुं समयं सायङ्कालं वर्त्तमानकालस्य सहस्व । तत्र हेतुमाह । अयं निशोऽवसान एव वासरमणिः सूर्यः शिवामणिस्ते शाप मूर्च्छां दयितेक चिन्ताद्युपक्रमणात् जायमानं मोहविशेषमित्यर्थः । शपथाक्रोशयोः शाप इति नानार्थरत्नमाला ।

नव । भट्टिदारिए खु वन्दिणो भट्टिणो अमच्च सार्ग्गं सच्छंदं घोसयन्ति ॥

अमरकः । अणुमणंतु मं महाभाआओ । जाव णाह- स्स इमं वुत्तन्तं णिवेदेमि ॥

कालिन्दी । एद्दिणा संजमण मन्तेण विम्हामिअ जह णेउर उर सद्देण जाणीअदि देवी पिअवहिं दट्ठुं आअच्छइ । इति निष्क्रामति ।

नवमा । अम्हे वि पच्चुगच्छम्ह देविं ।

मल्लिका । स्वगतं । अज्जवि अणासंघं हिअअं ।

सविस्मयं । कहं णु दिव्वंदरे मह वहिच्छन्दोत्ति वामनं । सुट्ठु भणिअं कालिन्दीए जह महाभाअस्सत्ति ।

अम । सहर्षं । स्वगतं अणट्ठिओ णाहस्स आदेसो दिट्ठोम [विआरेहिं पडिरव्व धारणे णाम] णाहे एदाए अणुराओ । वआसिओअ । (प्रकाशितव) णाहस्स भावो ।

मल्लिका । सहि ओ गच्छम्ह इति निष्क्रान्ता सर्वे ।

इति मल्लिका मारुते द्वितीयोऽङ्कः ॥

---

स्फुरिष्यते चपलीदिष्यति । स्फुर्स्फरणे इति धातोरात्मनेपदात् भवि- ष्यदर्थे लृट् । प्रस्तुताङ्कुरोऽलङ्कार । इति श्रीमन्मल्लिका- मारुतव्याख्याने द्वितीयोऽङ्कः ।

# अथ तृतीयोऽङ्कः ।

ततः प्रविशति मन्दाकिनी ।

मन्दाकिनी । अहो ऐदं धर्मसुदासुकूले विधातुः ॥

तथाहि ।

> अद्योजनस्य: सहृद्योऽनुरागो
>
> अम्बालिका मातृतयो विगाढ़: ।
>
> यत्रानयोः सङ्गममाशु शंसन्
>
> सौभस्य सीमन्त मर्यास लाभः ॥

धात्र ॥ दिव्याम्बरोत्तरीयं शिखा मणिन्यासरुचिर सीमन्तं ।

पश्यन्तीवपुरस्या प्राप्यं अम्ब स्मरामि वत्सायाः ॥

सहर्षं वितर्के । एतयोः खलु ।

> जन्मन्येव प्राक्तने लब्धदार्थः
>
> प्राप्तो दीप्तिं दर्शनादद्य भूयः ।
>
> मन्ये यावद्दुर्विभाव्य प्रतिष्ठो
>
> माञ्जिष्ठोऽयं वत्सयो रागबन्धः ॥ (१) ॥

---

(१) जन्मनीति । प्राक्तने विद्याधरामात्यचक्रवर्त्ति विश्वावसु तन-याल रूपे जन्मन्येव लब्धदार्ढ्यः प्राप्तस्थैर्यः । अद्य साम्प्रतिके चन्द्रवती-मात विश्वावसुनन्दनात्मरूपे जन्मनीत्यर्थः । भूयो दर्शनात् पुनरवलो-कनात् दीप्तिं प्रकाशं प्राप्तः दुर्विभाव्या दुरनीति चिन्तनाऽनर्हा प्रतिष्ठा-स्थितिः गौरवं वा यस्य स तथोक्तः । चरित्रस्थीर इत्यर्थः प्रतिष्ठा तु समाप्तौ गौरवेऽपि चेति नानार्थरत्नमाला । वत्सयोः मल्लिकामालतयोः रागबन्धः माञ्जिष्ठः माञ्जिष्ठरागः इति मन्ये यावत् निश्चयेन जाने इत्यर्थः यावत् पुरा निपातयोर्लट् इति निश्चयार्थको यावदिति निपातः अत-एव लट् च ।

तदुक्तं अनुरागतत्त्वविद्भिः ।

यूनोःस्थिरप्रकाशः स्थिराप्रकाशोऽस्थिरप्रकाशश्च ।

उत्तम मध्यम नीचा रागा माञ्जिष्ठ नील कौसुम्भाः ॥(२)

यदवं । वर्णितस्य कालिन्द्या मल्लिकाया महिमा तथा ।

दीना वल्ली भवन कुहरे पञ्जरस्थाचकोरी

पश्चात्त्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति ।

लीलारामात् पिक मुखरितात्का कथा या बिभेति

स्वालापेभ्यश्चकितनयना यस्त्वृद्ध कोमलेभ्यः ॥ २ ॥

---

(२)प्रकृतनायकयो रागश्चञ्चो माञ्जिष्ठ इत्युक्तं तथात्वे तद्दोषः किं ततु गुण इत्यतस्तस्य सहेतुकमुत्तमत्व प्रतिपादक मङ्गत् सम्वादमाह । तदुक्त-मिति ॥ प्रामाण्य विषये अनुराग तत्त्वविद्भिरिति स्थिरश्च प्रकाशश्च स्थिर-प्रकाशः स्थिरश्च अप्रकाशश्च स्थिराप्रकाशः । अस्थिरश्च प्रकाशश्च अस्थिर प्रकाशः च चकारादित्येते माञ्जिष्ठ नीलकौसुम्भाः रागाः अनुरागाः अन्यत्र यथाच यूनोः क्रमात् उत्तममध्यमनीचाः इत्यन्वयः । तथाच क्रमात् स्थिरप्रकाशत्व स्थिराऽप्रकाशत्वाऽस्थिरप्रकाशत्वरूपगुणवैशिष्ट्येन क्रमादुत्तममध्यमनीचानां पटादिरञ्जकमाञ्जिष्ठनीलकौसुम्भरागाणामिव यूनोः परस्परनिष्ठानुरागाणाम् स्थिरप्रकाशत्वादिगुणवैशिष्ट्यक्रमेण उत्त-मत्वादि कल्पना क्रमशालित्वा देतेषां तत्क्रमेण माञ्जिष्ठादि पदेन व्यव-हारः । अतोऽत्र प्रस्तुतस्य स्थिरप्रकाशत्व गुणवैशिष्ट्येन माञ्जिष्ठाख्यस्य रागस्य उत्तमत्वमिति भावः ॥

(२) इह मल्लिकया अनुभूयमानस्य मदनातङ्कस्य कालिन्दी स्वाव-र्णित प्रकारं निरुध्य तत्र अनन्तु तत्वाऽऽस्वादकयुक्तिभूतं तदातङ्कप्रकार-विशेषं वर्णयति । दीनेति ॥ वल्लीभवनकुहरे दीना सती पञ्जरस्थां कृत्वा स्थितोपरितनपक्षाणां रन्ध्रात् काचित्कच्छिद्रात् चकोरीपक्षयोः प्रकाशात् त्रस्तं गलितं शशिकरकणं चन्द्रकिरणलेशं व्योत्स्ना

इति। विनय गाम्भीर्य्य विधिः मारुतोऽपि निरवधि क्षेममारूढ एव। तथाहि।

इच्छति दर्शनमनिशं पृच्छति वार्त्तामपि कथयति रहस्यम्।
चिरपरिचयैकलभ्यं विस्रम्भं प्राप्य कतिपयैर्दिवसैः॥ ६॥

सुविहितस्य परस्पर प्रतिच्छन्द दर्शनमात्र विनोदितोत्क-
ण्ठयो र्वत्सयो र्भूयो दर्शनाय कालिन्दी सारसिका मुखेन वसन्तोद्याने निपुण उपायः। चिन्तितं। इदानीं ग्रन्थस्य ग्रान्थरी प्रतिविधेया। आकाशे।

साधु सर्वमङ्गलाचरणेश्वर विश्वावसो! साधु प्रजहतैव माधुर्य्यं प्रत्याख्यातो राजनिर्बन्धः।

---

स्वगतमिति यावत्तृतीयस्य मूर्च्छां ग्रानाभाव लक्षणं गुणविशेषं उपैति उद्दीपनदर्शनादिति भावः॥ तथा पिकस्वरितात् लीलारामात् विमेति इति का कथा उपन्यस्तप्रकारद्वैविध्येन किंवचनं अनावश्यं करत्वादिति भावः॥ तत्र कारणमाह। यत् यस्मात् कारणात् सा मूर्च्छाप्राप्ति भीति प्राप्तेः कर्तृत्वेनोपन्यस्ता मल्लिका कुहूकोमलेभ्य कोकिलालाप मञ्जुलेभ्यः कुहूस्तो कोकिलालापे इति मेदिनी इदं साभिप्राय विशेषणं लालापेभ्यः आत्मकर्तृकाभाषणेभ्यः चकितनयना कोकिलालाप भ्रमेण त्रस्तलोचना भवतीति शेषः। कोकिलालाप भ्रमेण स्वकर्त्तृकालापेन तस्यन्तानन्तां उपन्यस्त पूर्वं उद्दीपन भूतचन्द्रकिरण कोकिलालाप साक्षात्कारहेतुके मूर्च्छाप्राप्ति भीति प्राप्तीनाङ्गते इति भावः॥ अत्र नायिकायाः आत्म-कृते लालापविषयककोकिलालापभ्रमहेतुकत्रासभवसम्भवे वर्णिते आक-ङ्क्षितस्योद्दीपनभूतचन्द्रकिरणकोकिलालापसाक्षात्कार हेतुकमूर्च्छाप्राप्ति भीतिप्राप्ति सम्भवस्य कैमुत्येन लब्धत्वात् प्राकरणिकेन प्राकरणिकाक्षेप रूपोऽर्थापत्तिरलङ्कारः। कैमुत्यन्यायतः सा स्यादर्थापत्तिरलङ्कृतेति

यदस्या मल्लिकाया वरनिर्णये नाहं प्रमाणं। अपितु भगवती कात्यायन्येव इति। सानुशयं। हन्त प्रभ्वरक्तनयस्य कौटिल्य मापद्य अनाश्वासं हृदयं।

प्रविश्य ससम्भ्रमा सारसिका।

सारसिका। भअवई अणुट्ठिओ आदेसो वसन्तवणुज्जाणे अदिमुत्तलआमण्डवंमि पडिट्ठाविओ मए भमरअमेत्तसहाओ माहओ। कालिन्दीएवि तहिं अणिअइ अम्हमाहरणच्छलेण णोमालिआ दुईआ मल्लिआ।

मन्त्री। सानन्दं।

अस्तु भूयो दर्शनेन किमप्याश्वासनं वत्सयोः।
इमौ प्रकृत्या सुकुमार गात्रौ कथञ्चिदातङ्क ममुं सहेते।
परस्पराङ्ग व्यतिषङ्गहृद्यौ यन्माल्यहारौ प्रतिधारयेते॥ (४)

विलोक्य। वत्से! कुतो विभ्रान्तलोचना वेपमानाङ्गी ससम्भ्रमेव लक्ष्यसे।

---

च्छायत्वात् नयाच्च सर्वं स्वमूलं। दण्डापूपिकयाऽर्थान्तरा पतनमर्थापत्तिरिति॥

(४)इमाविति। प्रकृत्या स्वभावतः न तु क्लिन्नत्वेन सुकुमारगात्रौ मृदुशरीरौ सन्तापासहाविति भावः इदं साभिप्राय विशेषणं इमौ मल्लिकामाधवौ कथञ्चिदिति प्रयासेन असमातङ्कं ज्वरसन्तापं सहेते। तत्र युक्तिमाह यत् यस्मात् कारणात् परस्पराङ्गयोर्व्यतिषङ्गेण संसर्गेण हृद्यौ सुखकरौ माल्यहारौ कर्ण्णं व्यति धारयेते परस्परं धारयत इत्यर्थः। माल्यहार धारणं अन्यायेन परस्परं कारयत इति यावत्। धृञ् धारणे

सार । भअवदि ! अज्ज आयत्तो किल अमच्चो महारा-
एण विस्सासस्स एहिं पुच्छिदव्वं तुए गोरीघरं बट्टुअ
मल्लिआ कस्स दिण्णेत्ति । जधू कव्वइस्सदि अअवदी
सव्वरअस्स सत्ति माला अण्णट्ठेजो तुए गोरीए आदेसोत्ति ।

मन्दा । साश्चर्य । ततस्ततः ।

सार । अह तह्वेत्ति पमावण (प्रमापन्न) रामसासणो
परिवट्टो रामपुरुषेहिं गारीए घरम्मविसन्तो अज्ज आम-
च्छन्तीए मए दिट्ठो अमच्चो । एदं उण भअवदीए अत्ति
णिवेदेमित्ति आअदम्हि ।

मन्दा । हन्त ! शङ्कितमेवोपस्थितं । प्रकाशं वत्से !
अहमपि गौरीदर्शनाय प्रस्थितास्मि । तदादेशय मार्गं ।

सार । इदो इदो । उभे परिक्रामतः ।

मन्दा । वत्से सारसिके ! मन्ये मल्लिकामारुतयो-
रति प्रकटमनुरागमुपलक्ष्य किमप्ये तदारब्धं अम्बरेण ।

सारसिका । हुं महाराओवि तस्स अणुअलो संवी-
अदि ।

मन्दा । मुग्धे ! त्रिभुवन दुर्लभ यासमा नहि राजया-

---

इति धातोर्हृतुर्मतिर्येति अध्येषणार्थक णिचि कर्तरि कर्म्मव्यतिहार-
यित्वनेन परस्परकरणरूपकर्म्मव्यतिहार द्योतकं वर्त्तयोत्मनेपदं तत
लट् । कथेह परस्परमित्युपपदस्य अध्याहर्त्तव्यत्वनियमे सति परस्प-
रोपपदाद्येति वक्तव्यं रचनेन तत्प्रतिषेधाभावः कथमिति चेन्न । 
परस्परकरण रूपकर्म्म व्यतिहारद्योतकत्व विवक्षयैव चारितार्थेन
अवश्य परस्परपदस्य अनध्याहर्त्तव्यत्वात् ।

सारसिका। गिराणं दूरे क्खु मह्निम करपेवमाए चंड़िआए विक्कमो।

मन्दा। अतो न प्रभवन्ति सुरेन्द्राणामपि माया महामायां।

सार। सच्च एदं। अपनतो विलोक्य। एदं सुसह कालं वुद् भिषिद्द तमाल सन्ड पिण्डिअंधआरं गोरीघरं।

मन्दा। वत्से! अत्र स्थित्वैव श्रोष्यामो दूरस्थितानामेव सुलभोऽयं वचसा विशेषः। नेपथ्ये।

मातर्नमोऽस्तु तुभ्यं प्रसीद कल्याणि देवि! शर्व्वाणि!
ब्रूया वरं वरेण्यं वत्सायास्त्वत् प्रसादलब्धायाः॥ (७)

मन्दा। आकर्ण्य। तदिदं धीरप्रशान्तगम्भीरस्वरस्य विश्वावसोरनुनाथनं। (८) पुनर्नेपथ्ये। वत्स विश्वावसो! आयतां शम्बरको मल्लिकाया वर इति।

---

कन्दुक क्रीड़िताय दिशन्ती प्रयच्छन्ती सती चण्डानां दानवानां वराटाश्च शङ्खाश्च कवयश्च शार्ङ्गाः चापानि च शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने इति मेदिनी॥ शिखिखानि त्रिशूलानि च विशिखाः बाणाश्च एभिः उद्दण्डं अत्युद्धतं यत् चण्डं समूहः तत्कर्म जिहिड़े अभिबभूव॥ हिडि गत्यनादरयोरिति धातोरात्मनेपदात् कर्त्तरि परोक्षे लिट्॥ षण्डपद्मादि सङ्घाते इत्यभिधानात्। अचेतनवस्तुसमूह वाचिनः षण्डपदस्य अत्र प्रयोगमहिम्ना सचेतनमपि दानवसमूहं अचेतनवस्तु सङ्घातमिव अनादृतवतीति भावो द्योत्यते॥

(७) मातर्नमोऽस्तु तुभ्यमिति पद्ये। वरेण्यं श्रेष्ठं इत्यर्थः॥

(८) तदिदं धीरप्रशान्तगम्भीर स्वरस्य विश्वावसोरनुनाथनं इत्यत्र अनुनाथनं अभ्यर्थनमित्यर्थः॥

मन्दा। पुनरावर्त्त्य। कथमियं तमालं पश्च गृहीत्वा करभ घर्घरस्वरा प्राकाशवाणी। सरोदवारेच चच्चुः प्रेम। पश्च सारस्विके! तमालस्कन्धे लग्नात्मजः कोऽपि पुरुष इव।

सार। विलोक्य। भअवदि! सच्चं पुरुषो एव्व चील-पड़ाव कुण्ठिओ तमाल पल्लव पुंज णिव्विसेसो चेव्वइ (जल्पति)

मन्दा। अहो! प्रव्वरकस्या विनयः। यत् निपुण प्रतारणोत्सुकहृदयो विश्वावसुं वञ्चयितुं चेष्टते।

सार। अह्मे उण अंते उरं गदुअ सव्वं एदं पआ-सइस्सामो।

मन्दा। वत्से! मामेवं। कालिन्दीं विना न क्वापि प्रकाशनीयोऽयमर्थः।

सार। अह को एत्थ पडिआरो।

मन्दा। ननु वञ्चनस्य वञ्चनमेव प्रतिक्रिया॥

कुमन्त्रिणं कूटविधान चुञ्चुं (८)
कुटैः सुगूढ़ै रति सन्दधामि।

---

(८) कुमन्त्रिणमिति॥ कूटविधानचुञ्चुं मायां निर्माणे चतुरं तेन वित्त इत्यादिना चुञ्चु प्रत्ययः॥ कूटोऽस्त्री निश्चले राशौ लोह-मुद्गर दम्भयोः मायाद्रि शृङ्गयोस्तुच्छे इति मेदिनी॥ कुमन्त्रिणं कुत्-सितगुह्यवादशालिनं अव्वरकं कर्म मन्त्रोवेद विशेषे स्यात् देवादीनाञ्च साधने। गुह्यवादेऽपि च पुमानिति मेदिनी। सुगूढैः कूटैःमायाभिः अति सन्दधामि वञ्चयामि इत्यर्थः॥ यत् यस्माद्धेतोः परवञ्चतानां वञ्चकानां

यत्नकष्टकानां वरभ्रमतानां

निष्कासनं कण्टकतो लघीयः॥

सार। सच्चं जुत्तइ एदं।

मन्दा। सानुकरणं। मारुतस्य प्रियसखः कलकण्ठो विष्णु रातपुत्रीं रमयन्तीं कामयते॥

सार। अत्थि दुवेणंवि अणुराओ कहिअं मह्नुअरिआए रच्छागअं। (रथ्यागतं) कलअण्ठं दट्ठुणा मदन्तो मअव संज रोविअ सहीए रमयन्तो एति।

मन्दा। सा खल्वद्य सोमरसरचि सिसिणास्तु गंतवती त्वं पुनरमुं आकाशवाणी वृत्तान्तं कालिन्द्याः कर्णे निवेद्य कलकण्ठमपि तत्तीरं संश्लेषय। अहमपि गौरीं दृष्ट्वा यावद्विश्वावसुसकाशात् भ्रमात् निवर्तयामि।

सार। तह। इत्युभे निष्क्रान्ते।

मिश्रविष्कम्भः।

ततः प्रविशति उद्यानस्थो मारुतो भ्रमरकश्च।

मारुतः। (१०) सत्यमिदं ताच्चिन्त्यात् ताद्रूप्यं नामेति तथाहि।

---

निष्कासनं वहिष्करणं कण्टकतः तृतीयार्थे तसिः कण्टकेन करणेनेत्यर्थः॥ लघीयः अतिलघु सुकरमिति यावत्॥

(१०)सत्यमिदमिति॥ ताच्चिन्त्यात् अपरिच्छिन्नैक विषयक ध्यानात् ताद्रूप्यं ध्येय वस्तु सारूप्यं इति अयं प्रकार इत्यर्थः। इति हेतौ प्रकाशने निदर्शने प्रकारे स्यात् इति मेदिनी। सत्यं नामेति स्मरणे। नाम कोपेऽप्युपगमे विस्मये स्मरणेऽपि चेति मेदिनी॥ तथाच ताच्चिन्त्यात्-

(११) तदा मुग्धं वक्त्रं किसलय सखः सोऽधरमणिः
विशाले ते नेत्रे स्तनभरनता सा तनुलता !
सलीलं तद्यातं जननयनसञ्जीवन सुधा
प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥

---

तद्रूप्यमिति वाक्यप्रतिपाद्यार्थस्य संप्रति स्वानुभव गोचरी भावात् अहमिति सिद्धान्तभूतस्य श्रुतपूर्वस्य तस्य वाक्यस्य अदृष्टपूर्व गोवदय पदार्थभूतगवय दर्शनात् श्रुतपूर्वस्य गोवदयपदस्येव सत्यता स्मरणमित्यवगन्तव्यम् ॥ अहमिति सिद्धान्तस्तु अथातो ब्रह्मजिज्ञासा तमेवं विदित्वाति मृत्यु मेति । मयि सर्वात्मके भावे मत् सामीप्यं भजत्ययं । सैव सालोक्य सारूप्य सामीप्या मुक्तिरिष्यते । गुरूपदिष्टमार्गेण ध्यायन्मद्रूपमव्ययं । मत्सायुज्यं द्विजःसम्यक् भजेद् भ्रमरकीटवत् । ध्यानात् कैवल्य माप्नोति अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः ॥ इत्यादिभिरनेकप्रमाणैः अपरिच्छिन्न ब्रह्मध्यानेन ध्याता ध्येय सारूप्यमश्नुते यथाच लोके शाकिन्यादि पत्र शाक संस्योगात्तत्तवर्णः कीटविशेषः कुलालनाम्ना शोभनचिता भ्रमरविशेषेण सुकल्पित सद्म विशेषसंस्थापितः सन् भ्रमत्कुर भ्रमर चिन्तनेन तत्सारूप्य मयते तथेति । विस्तरस्तु तत्तत प्रबन्धेषु द्रष्टव्यः । प्रतिपादितश्चैतदस्मदीयस्तोत्र रत्नमालायां भक्तिभावितस्तमोपि देव त्वं सरूपतां जनस्य नूनं भवुको मयूरसारिणीन्द्राद्यौषधी विभाविते रवैर्वा इति रवेः शुल्लस्य भवुकः भवुपामाण इवेत्युपमा एतत् प्रपञ्चस्तु रसपादस्वखेषु द्रष्टव्यः । यद्यप्यत्र प्रकरणेषु यद्वक्तव्यं विस्तरभयाद्विरम्यते ॥

(११)तान्निलग्राचारूप्यमिति वाक्यप्रतिपाद्यार्थस्य स्वानुभवगोचरी भाव प्रकारमाह ॥ तदाहीति ॥ आसुग्धं वक्त्रं आसुग्धत्व विशिष्ट वक्त्र पदवाच्यं वस्तु इत्यर्थः । तत् पूर्वदृष्टं मल्लिका वक्त्र मित्यर्थः ॥ नान्यदिति भावः । किसलय सखोऽधरमणिः किसलय सखित्व विशिष्टाऽधरमणिपदवाच्यः सः पूर्वं दृष्टो मल्लिकाधर मणिः नान्यइति भावः । एवमेव विशाले नेत्रे ते स्तनभरनता तनुलता सा सलीलं यातं तत् इत्यत्रा-

परितो विज्ञेया। अहो विस्मापकोऽस्य विरिञ्चस्य प्रपञ्च निर्माण प्रकारः।

विम्बाः काम्बुशिरःसु शीत मसृणां विम्बीफलेनाङ्किताः।
कुम्भा व्योमनि कुम्भिनी पुलिनसम्भाराश्च रम्भागगाः॥
अम्भोजानि दले दले धृत विधून्य तत् समस्तं पुनः
शम्पा वल्लिषु तन्मयश्च भुवनं किं नाथ विज्ञोयते (१२)

---

अत्र इत्याद्यनेक प्रमाण विरोधाच्च इत्यहेति सिद्धान्तः। एतत् प्रपञ्चस्तु वयमिह प्रकरण भङ्गभिया विरमामः। केचित् तु आमुग्धं अति सुन्दरं तत् वक्त्रं पूर्वदृष्टं मल्लिका मुखं किसलय सखः सोऽधर मणिः पूर्वदृष्टोऽधर मणिः एवमवशिष्टमपि कल्पनीयं प्रियावक्त्रस्य निवार माहत्तिः जननयन सञ्जीवनसुधा सकल जनानन्दकारिणी साप्रिया२ साप्रिया२ पूर्वदृष्टा मल्लिका२ पूर्वदृष्टा मल्लिका२ इति ताश्चिन्त्यात् इत्यादि पूर्ववत् इति योजयन्ति।

अन्ये तु तत्वक्त्रं पूर्वदृष्टं मल्लिकाया वदनं आमुग्धं अति सुन्दरं सोऽधरमणिः पूर्वदृष्टोऽधरमणिः किसलयसखः। एवमेव शेषमपि योजनीयं। जननयन सञ्जीवन सुधा साप्रिया पूर्वदृष्टा मल्लिका सा सा सा उपन्यस्त वक्त्र सौन्दर्य्यादि गुणविशिष्टा (निवारसूक्तिः) इति ताश्चिन्त्यादित्यादि प्राग्वत् इति योजयन्ति। अपरे तु तद्वक्त्रं आमुग्धं आसएवं शेषमपि संयोज्यं जननयन सञ्जीवन सुधा साप्रिया सासा उपन्यस्त गुणविशिष्टा आस बभासे। अस गति दीप्त्या दानेष्विषु भय पद्दिनो धातोः कर्त्तरि परस्मैपदाल्लिट्॥ इति ताश्चिन्त्यादित्यादि प्राग्वदिति योजयन्ति एवमन्वय द्वैविध्येऽपि ताश्चिन्त्य प्रकारो भावस्य मासम्पत्तिः इत्यलं पल्लवितेन॥

(१२) आकूतविशेषं मनसि निधाय तं विरिञ्च कृत प्रपञ्च निर्माण प्रकार विस्मापकता वर्णनेन परिष्कारोति। विम्बा इति अन्वय स्फुट एव। तथाच विम्बो फलाङ्कितत्वं चन्द्र विम्बानां तथा शङ्खाग्र-

भ्रमरकः । याह ! उववत्तीहिं णिर्म्मीदिवि तत्तहोदीए अणुराए कहं ण संसयो ॥

मारुतः । ननु रागान्धधियां अविश्वसनीया उपपत्तयः । पश्य ।

> उत् प्रेक्षते नयनयो रसतोऽपि भावान्
> मोहेन कल्पयति मौग्ध्य मनुन्मुखत्वे ।
> योषासु रागपरशो विहताभिलाषः
> प्राप्यावमान मनुताप मुपैति मूढ़ः ॥

भ्रमरकः । णं भणिअं सीमन्त मणिं ओव्वयं दिणमए-दिट्ठो उत्तरिज्ज वक्कन लिहिओ णाहस्स पडिच्छन्दोत्ति ।

मारुतः । तादृशानां भागधेयानां अभाजन मात्मानं

---

सरसि नलिनी पद्मलतातः स्त्रीलिङ्गात् स्त्रीतद्योतनं । अयोऽपि ब्रह्मः सूर्य्यः पुंलिङ्गात् पुंस्त्वद्योतनं स इति शेषः ॥ तथापि बहुदूरवर्त्तित्वेन सङ्गमं विनापि इत्यर्थः । तयोः स्त्रीपुंसभूत नलिनी ब्रह्मयोः परस्परं प्रभवेण जन्मना सरसे सानुरागे । रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रव रागयोः । इति मेदिनी ॥ भावे अभिप्राये ख्याते विलासित्व विकासकत्व रूपेण प्रसिद्धतया वर्त्तमाने सति । मिथुन प्रथा मिथुनत्व प्रसिद्धिः । मिथुनत्वञ्च परस्पर स्त्रीपुंसत्वप्रयुक्त सुख निर्व्वाहत्वं । यदुक्तं प्रेमलक्षणानि मिथुनानीति । तयाच काम पूर्णत्वेन प्रसिद्धिरित्यर्थः । कारणीभूत सङ्गमं विनापि सङ्गम विषयेच्छा विशेष सद्भावमात्रेण नलिनी ब्रह्मयोः तत्कार्य्य भूत काम पूर्त्ति मत्व लक्षणं मिथुनत्वं प्रसिद्धमिति भावः ॥ सामान्येन विशेष समर्थन रूपो-ऽर्थान्तर न्यासोऽलङ्कारः ॥ अत्र चाभिलाष विप्रलम्भ शृङ्गारः प्राधा-न्येन व्यञ्जयतिति अभिधा मूल संलक्ष्य क्रम व्यङ्गो वस्तु ध्वनिः ॥

व्यमानस्य मम सर्वथा अनाश्वासमेव हृदयं। येन तवापि चनमाश्वासं तर्कयामि।

भ्रमः। वचितं। मखे अज्ज अप्पणोव्व दट्ठूण अप्पण वेसु वि आसासणं संकाविज्जं होज्ज।

मारुतः। कौतुकं। प्रियागमनं प्रतिपालयन् इह केन नयने विनोदयामि।

भ्रमः। एदं कीलंत वसंत पश्रवोश्र गलिश्र लक्खारस रंग पलूलव तं व पाश्रव णिउरंवं फन्दन्त मन्द गन्ध वहंदोलिश्र महुर सोल्लवेली कुसुम परिमल वोलिर पुलं धओलि णिम्रोलि अं वरं णवणव सह आर भञ्ज वल्लण गव्विश्र कोइल पञ्चम हलं वोल दिश कसवारणं वसंत वसुञ्जाणं पेक्खन्दस्स णाहस्स सुलहो मणविणोदो।

मारुतः। विहस्य। तदिदं दर्वीकरात् भीतस्य वल्मीके वासोपदेशः। मन्मथाद् भीतस्य तच्छिविर वासमादिशसि पश्य।

आरक्षाः पटमण्डपाः किसलयैरुल्लोचिताः पादपाः
भृङ्गालीकरवालिका परिकराः सेना भटा वायवः।
ताराः काहल निस्वनाः पिकरवा स्तम्भमहे डामरं
स्कन्धावार पदं विभोरुपवनं नाम स्मरोर्वी भुजः।(१६)

---

(१६) उपवनस्य मान्मथशिविरत्वमेव साधयन्नाह। आरक्षा इति। किसलयैः उल्लोचिताः उल्लोचाः कृताः तत्करोति इति ण्यन्तात् कर्मणि क्तः॥ वितानावित किसलयवन्त इत्यर्थः। अस्त्री वितानमुल्लोच इत्यभिधानं॥ पादपाः। आरक्षाः पटमण्डपाः मोणपट इत्याधि भृङ्गाली

तदुपाहि शिविरमानीयतां द्वीपान्तरभूषणं प्रिया प्रति-च्छन्दः ।

भ्रम । जं णाहो आणवेदित्ति । परिक्रम्य । आकाशे उज्जा णाट्टे वट्टामो तुम्हे सज्जाआ णाहुच्च । इति निष्क्रान्तः ।

मारुतः । साश्चर्यं । को नामास्याः प्रति नवं रूपामृत-मास्वादयिष्यति सुकृती ॥

स जयति तरुण स्तरुणः सा च तपस्वा तपस्वापि ।
ये न यया पक्ष्मि मया पाणिर्ग्राहिष्यते चकोराक्ष्याः ॥ (१७)

---

भ्रमरपङ्क्तिः करवालिका परिकरः अविरता सङ्कुः वायवोऽनिलाः सेना-भटाः सैनिकाः । भवेत् परिकरः सङ्कु इति मेदिनी । तथा पिकरवाः तारा: अत्युग्राः । काहलनिस्वनाः । तत् तस्मात् पटमण्डपादि सामग्री-सद्भावादित्यर्थः ॥ उपवनं आरामं कर्म विभोः स्मरोर्धौ भुजः डामरं विपुलं स्कन्धावार पदं सेना सन्निवेश स्थानम् शिविरमिति यावत् । स्कन्धावारः स्यात् कटकः शिविरं बलसंस्थिति इत्यमरः शेषः ॥ मण्डपे नामेत्यस्युपगमे । नामकोपेऽभ्युपगमे इति मेदिनी । अत्र पटमण्डपादि शिविर लिङ्ग सद्भावात् हेतोः उपवनं पक्षीकृत्य स्मर सहोपात्त स्कन्धावार पदत्वं साध्यत इत्यनुमानालङ्कारः ॥ पादपाः पटमण्डपाः भृङ्गाली करवालिका परिकरः वायवः सेनाभटाः पिकरवाः काहल-निस्वनाः इत्यत्र अलङ्करूपकं ॥ एतच्चानुमानस्योत्थापकत्वेनाङ्गं द्वावनयोः परस्परमङ्गाङ्गि भावेन सङ्करः । इदन्तु रूपकोत्थापितमिति तर्कानुमान विलक्षणं ।

(१७)स इति ॥ स मल्लिका पाणिग्राही तरुणः युवा तरुणः तरुणपद-वाच्यः उत्कृष्ट तरुण इति यावत् जयति । सा मल्लिका पाणिग्रह-योग्या तपस्वापि तपस्वा च तपस्वा शब्दवाच्या उत्कृष्ट तपस्वेति यावत् ॥ चकारात् जयतीत्यनुकर्षः ॥ कोसौ ? इह । तरुणत्वं नाम पाणि-

निवस्य। मम पुनरस्य दुर्निवार प्ररोहस्य मनोरथद्रुमस्य मन्दाकिनी वर्षास्वपवनो भवन्ति। अपिच।

निश्चिन्वानाः परम सुलभान्तान्तु निर्याति कण्ठात्।
भूयो भूयः प्रसभ मसवो यत् प्रतिष्ठा समानाः।

---

यद्यप्ययोग्यो दया विशेषः तस्याच फलं पाणिपङ्कः। तस्य च उत्तम नायिका सम्बन्धित्वे उत्कृष्टत्वं इत्यतः प्रकृते च उत्तमोत्तम नायिकायाः पाणिग्रहरूपोत्तम फलविशिष्टत्व एव सप्रयोजन तच्चपदवाच्यत्वेन उत्कृष्टत्वं। अन्यथात्वेऽस्मिन् तच्चपदप्रयोगो विलादि पदप्रयोग वदिति भावः। तथा दुर्लभफलप्रति प्रयोजकं कर्म तपस्या तस्याश्च मल्लिका पाणिग्रहरूपदुर्लभफलप्राप्ति प्रयोजकत्व एव तपस्या पदवाच्यत्वे नोत्कृष्टत्वं। अन्यथात्वे तदनुष्ठानस्य वैफल्यात् तत्र तपस्यां पदप्रयोगो कुर्वेवेति भावः। येन तच्चेन कर्त्रा मल्लिकया परिपक्वया यया तपस्यया प्रयोजिकया चकोराक्ष्याः लोकोत्तर नायिकात्वद्योतकमिदं पदं। पाणिः कर्म पाणिग्रहते यहधातो रुपादानार्थकात् भविष्यदर्थे लट्। अत्र उत्कर्षार्थक तात्पर्य्य भेदेन शब्दार्थ पौनरुक्त्याल्लाटानु प्रास नामा शब्दालङ्कारः। लक्षणन्तु शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्य्य भेदवत्। स कान्यतात् पर्य्यविदां लाटानु प्रास इष्यते इति विद्यानाथः॥ उज्ज्वलोद्भटेन। स्वरूपार्थ विशेषेऽपि पुनरुक्तिः फलान्तरात्। शब्दानां प्रकृतीनां वा लाटानु प्रास इष्यते इति। ननु अनन्वयेऽपि शब्दार्थ पौनरुक्त्य सम्भवात् लाटानुप्रासत्वं किं नेष्यते। सत्यं यद्यपि युद्धेऽर्जुनोऽर्जुन इत्यादौ अनन्वये अर्थपौनरुक्त्याभावं लक्षणं। तथापि निर्देश प्रति निर्देशयोरेकरूप्या भावे पयसि प्रक्रम दोषप्रसङ्गात् आनुषङ्गिकं शब्द पौनरुक्त्यं। अत्र तूभय, पौनरुक्त्य, मप्यावश्यक मेवेति विषयभेदान्न कोऽपि विरोधः तदुक्तं अनन्वये च शब्दैक्य मौचित्यादानुषङ्गिकं अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकमिति। इति मल्लिनाथ सूरि सूनु कुमार स्वामि सोमपीयो।

मुख्यो हेतुः पुनरिह तया मुग्धगात्र्या प्रयान्त्या ।
मुक्ता ये ते वलित वदनं साभिलाषाः कटाक्षाः । (१८)

नेपथ्ये । इद्दो इद्दो भट्टिदारिआ ।

मारुतः । विलोक्य । सानन्दं । प्राप्ते वात्र कालिन्दी नव-
मालिकाभ्यां मन्नयन चकोर चन्द्रिका मल्लिका ।

निर्वर्ण्य सदयं ।

इन्तेयं मृदित मृणाल निःसहाङ्गी
खिन्दाना जघन भरेण दुर्वहेण ।

---

(१८) निखिन्नानाः परमसुखभामिति प्रतिष्ठया कार्य्य निर्वाह सामर्थ्येन गर्वेण वा असमानाः निरुपमाः अति चतुराः अलुब्धा इति वार्थः ॥ प्रतिष्ठात्तु समाप्तौ गौरवेऽपि च कार्य्य निर्वाह सामर्थ्ये इति नानार्थरत्नमाला । असवः प्राणाः तां मल्लिकां परं असुलभां केवलदुर्लभां निखन्वानाः निश्चयं कुर्व्वाणाः सन्तः भूयो भूयः पुनःपुनः प्रसभं कण्ठात् निर्यान्ति निर्गच्छन्ति इति यत् तु इह अस्मिन् विषये उक्तप्रकारेण प्राणनिर्याण विषये इत्यर्थः यत् प्रतिष्ठा समानाः इत्येक पदत्वे तु । यया मल्लिकया प्रतिष्ठया स्थित्वा समानाः तुल्याः मल्लिका सहवासिन इत्यर्थः । हृदयवर्तित्वादिति भावः । असवः तां परं असु-लभां निखिन्वानाः सन्तः भूयो भूयः प्रसभं कण्ठात् निर्यान्ति तु किन्तु इत्यर्थः । तु पादपूरणे इत्यादिना पक्षान्तरे नियोगे चेति मेदिनी । इह प्राणानां सार्वदिक तद्ध्यानोपलक्षितत्वात्तद् दौर्लभ्य निश्चयेन कण्ठावधि-र्निष्क्रमणमित्यनेनार्थः । मुख्यो हेतुः पुनःप्रयान्त्या तया मुग्धगात्र्या वलितवदनं साचीकृतमुखं यथा तथा मुक्ताः गमनसमये साचीभूत त्रिभागमुखी सखीमिति पद्योक्तप्रकारेण प्रेरिता इत्यर्थः । साभि-लाषाः एते प्रतिभा वशात् साक्षाल्लालसमानाः कटाक्षाः तारका गतागति विभ्रान्ति वैचित्र्य विवर्तमानि इत्यर्थः । अद्यापि उक्तगुणविशिष्टानां

आयाति सम्भ्रमभरभङ्गुरावलग्ना
पादाभ्यां प्रति नवपल्लवारुणाभ्यां ॥

ानन्दातिशयं नाटयन् ॥

अरस्यास्त्नेयास्तैः प्रतिहतमियन्तं हि समयं
यदासीदस्तोक व्यसन परितापातिविधुरं ॥
तदस्याः सान्निध्ये शिव शिव कुतोऽपि प्रसृतया:
सुधाधौ रण्या व प्लुतमिव मनोह्यपुलं मम्हो ॥ (१८)

ावदहं लता गुल्मान्तरितो विस्रब्ध मेनां पश्यामि। इति
था करोति ॥

ततः प्रविशति मल्लिका नवमालिका कालिन्दी च।

मल्लिका। स्वगतं। अज्जवि अणासंघं हिअ अं। सविषयं।
हं पु दीवा दूरे मह पड़िक्कन्दो सुट्ठु कहिअं कालि-
ीए अह महाभाअस्से त्ति ॥

सख्यौ। इदो इदो।

---

टाक्षाणां स्वानुभव गोचरत्वेन सविच्छितत्वात् सर्वदाप्यभङ्गुर नायिका
ातः प्राणाः तद्विरहमसहमाना बलात् पुनः पुनः कण्ठाग्निष्क्रा-
तीति भावः। ये ते इति यच्छब्द तच्छब्दाभ्यां पाठे तु ये कटाक्षा
ेतवदनं छम्मः ते इत्यन्वयः ॥

(१८) अस्येति ॥ यन्मनः कर्तृ अस्यास्नेयास्तैः इयन्तं समयं प्रति-
तं सत् अत्र प्रतिहतमिति कर्मणि क्त प्रत्ययस्य भूतार्थकतया फल-
प्ति स्तत्वेन अपवर्गे तृतीयेति समयपदस्य यद्यपि तृतीया युक्ता
ापि क्त प्रत्ययवाच्य भूतकालस्य समयविशेषणेन इयन्तमिति पदेन
ंसायत्व द्योतनात् स्वरूपं वर्तमान सामीप्ये वर्तमानवद्वेत्यनेन
िविशेष भूतार्थक क्त प्रत्यय प्रयोगः। तथाच क्त प्रत्ययस्य भूतार्थकत्व

मारुतः। निर्वर्ण्य। अत्यतिशयश्च सौन्दर्य्यं मस्या
वपुरावेदयति प्रतिक्रान्त मर्य्यादं मनङ्गविकारं। तथाहि
विषया विधुरा दृष्टिः श्वासानिला ग्लपिता धराः।
तनुरपि भृशं म्लाना लूनेव पल्लव मञ्जरी ॥
अपि च। लवली पाकोद्भेदाभि राम वदाबद
स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा॥

मल्लिका। कालिन्दि! सोक्खु एसो पच्च ग्गदंसिन्न थ
वणेदसिद्दर लदामण्डलो पदेसो जो तुए पुणो पुणो
वस्सिदो।

मारुतः।

अयि पिवत ममृत मधुरानालापानसित कमल नयनायाः।
क्रूर कुहुमुख कूजित नाराचोद्वेजितौ कर्णौ॥ (२०)

कालिन्दी। स्वगतं। मस्से एत्थ कहं वि लदाणिउञ्ज-
आलीणो मारुओ होज्ज। प्रकाशं। सच्चं सो एव्व पोंचम हु

---

प्रयुक्त फलप्राप्ति पूर्वकत्याग द्योतकत्याऽभावात् कालाध्वनो रत्यन्त संयो
इत्यनेन द्वितीया। वाध्यमान वत् इत्यर्थः अलोक व्यसनेन यः पि
ताम्र तेनाति विधुरं अनन्तकं प्रयुक्तं आसीत्। वर्तमान सामीप्ये इ
नेन अयमपि पाक्षिकः प्रयोगः। विधुरौ कष्टविश्लिष्टाविति नान
रत्नमाला। तन्मनः अस्याः सान्निध्ये सति कुतोऽपि अविदित प्रदेश
प्रसृतमया सुधाधोरण्याव प्लुतं अभिषिक्तमिवेत्युत्प्रेक्षा कौतुकं श्लिष
मित्यर्थः॥ कामुकमिति यावत्। कृमेरलुच इत्युकच प्रत्ययः। कामुक
मृगकामिनोरिति अभिधानम्।

(२०) अयीति॥ क्रूराणि यानि कुहुमुखानां कोकिलानां कपु
कुहुमुख इति अमर शेषः। कुजितान्येव नाराचाः॥ तैरुद्वि
जितौ अयि कर्णाविति सम्बोधनं॥

महुअरमहुअरम्मि ठकंव झंकार संलावो मन्दपवणचलिए णा किसलय हत्थेण अक्कार इव्व तुमं।

मल्लिका। ता एत्थ अवचिण कुसुमाइं।

सख्यौः पुष्पापचयं नाटयन्ति।

मारुतः। वयस्य, इमं मल्लिकां निर्वर्ण्य। एषा खलु।

उत्तानीकृतवक्त्र बिम्बमुपरिद्योतत्परागोत्कर
त्रस्ता कूणित लोचनं स्मर भरोदाय स्य मध्याङ्कुरं।
ईषद्घ्रितनाभितुङ्ग जघन क्रान्तोरु पादाङ्गुलि
व्यासक्तस्थिति लीलयाऽपचिनुते पुष्पं नु चित्तं नु मे ?(२१)

मल्लिका। हन्त! कीस मे अवचिमाइं वि हत्थेणोलम्बन्ति कुसुमाइं।

नवमा। सहि असहिअमाणिणं अवइ अमुक्का णिकुसुमासु एसा वल्ली॥

मारुतः। हन्त निजावयव शोभा भ्रमरैरेव भ्राम्यति मल्लिका। तथाहि।

शोणिम्ना करपल्लवस्य रचयन्त्युल्लासिनः पल्लवान्।
स्वच्छाभि र्नखकान्तिभि र्विदधती स्मेरां प्रसूनावलिं।
तन्वाना तरलैरपाङ्ग वलनैः सञ्चारिणः षट्पदान्।
मुग्धा पूर्वं समुज्झितामपि पुनर्वल्लीं समालम्बते॥

---

(२१) उत्तानीकृतेति। पुष्पं अपचिनुते नु मे चित्तं अपचिनुते नु इति सन्देहः॥ उत्तानीकृत वक्त्र बिम्बत्वादि धर्माणां उभयत्र साम्येऽत्वात्। अत्र उत्तानीकृत वक्त्रबिम्बमित्यादिना। क्रिया स्वभाववर्णनात् स्वभावोक्तिरेतदनु प्राणितश्च सन्देह इत्यनयो रङ्गाङ्गि भावेन सङ्करः॥

मल्लिका। सवऋं परिक्रम्य। लतान्तरमवलोक्य सभ्रमं।
अम्हहे एहिंखु भत्ति उम्मड़िया झंकार मुहरा पीलन्ति
महुअरणम्मि दुल्ललिआ चञ्चलिआ।

मारुतः। विलोक्य।

इयमधिक लोभनीया बाला चलहार लुलित कुचकलशा।
मुखकमल सौरभ बलमधुकर सम्भ्रम विलोला॥

नवमालिका। सहि! विहविद पारिआअ कुसुम सोरभ
गव्वेण तुह णिस्सास परिमलेण आअड्ढिआ विसज्जिअ
सहआर चम्पअ मालई पुत्राअमुहाइं पुप्फाइं ममन्दि
अहिमुहं भमर गणा ता संच्छाएहि करअलेण मुहं बुधं।

मल्लिका। तथा करोति।

मारुतः। हन्त।

चकितबालकुरङ्ग विलोचना करतलेन समावृणुते मुखं।
तदपि पङ्कजमाकलयन्नयं भ्रमति भृङ्गगणो हृतभङ्गिग्रः

मल्लिका। णिवारेहि णिवारेहि पुणोवि ण मुञ्चन्ति
महुअर हदआ।

नव। सहि! मामा भीरुआ होहि एसा अहं णिवा-
रेमि। इति मल्लिका मालिकान्तरं पदान्तरं नयति।

मल्लिका। चक्षुरुन्मील्य। दिट्ठिआ कहं विणिम्मुक्कम्हि
भिङ्गसंकडादो।

कालिन्दी। सहि! कोमलङ्गि मल्लिए! दिढंखु किल-
न्तासि कुसुमावचअं संभमेण। ता का ए वि वल्लिए सीघ-
लच्छाआणिविड मूलदेसे खणं उव विसम्ह

मारुतः। सत्यमियं क्लान्तेव। कुतः।

श्वासोद्गम सुल्वणं कथयतः प्रस्यन्दमानौ स्तनौ।
र्वो वेपथु रूत्यते रुचिरयोरत्‌कम्पिना वाससा
यत्नैव ननु श्रमाम्बु कणिका नेत्राम्बु जोन्नासिनी
ताः पाणितलेऽपि पलुव सखे लाघ्वा विना रक्तिमा॥

मल्लिका। वत्स्येहं साञ्जलिबन्धम्। अम्ब ! पणमामि।

मारुतः। सबहुमानं।

ऽपि पारिजात लतिका मधिशेषे हन्त वल्लि यस्यास्त्वं।
जननयनभृङ्गसेव्या कलिका लावण्य मधुमयी सेयं॥ (२२)

---

(२२) अपीति। हे वल्लि ! अयि लतिके ! जननयन भृङ्गसेव्ये
नयनैः भृङ्गैश्च सेव्ये प्रार्थनीये इत्यर्थः। इयं साभिप्राया सम्बुद्धिः
इति शेषः॥ पारिजात लतिकामपि अतिशेषे। अतिक्रम्य वर्तसे।
ऽप्यधिकासीति भावः। जननयन भृङ्ग सेव्ये इति सम्बुद्धि सामर्थ्यात्
रिजातलतिका भृङ्गमात्र सेव्या। त्वन्तु जननयन भृङ्गोभय सेव्यासी-
सा मोरिति भावः॥ उभय सेव्यत्वे हेतुमाह। यस्यास्ते लावण्यं
भा विशेषः मधुमकरन्दश्च एतदुभय मयी एतदुभय प्रचुरा सा अञ्जलि
इयं निर्दिश्य मानत्वह स्ति वस्तु विशेषरूपा (निर्दिश्य मानं वस्तु च
लमेव) कलिका जातावेक वचनं असीति शेषः। पारिजातलतिकाया
माल सेव्यत्वे मधुमय कलिकामात्रवत्त्वं हेतुः। तव तु जननयन
भय सेव्यत्वे लावण्यमय मधुमय कलिका शालित्वं हेतुरिति भावः।
ाच त्वया मधुमय कलिका शालित्वप्रयुक्त भृङ्ग सेव्यत्व रूप साधर्म्ये
रिजातलतिकायास्तुल्यत्व सद्भावेऽपि लोके उत्कृष्टत्वेन प्रसिद्धया
ापि दुर्लभो लावण्यमय मल्लिकाञ्जलि रूप कलिका शालित्व प्रयुक्त
ननयन भृङ्ग सेव्यत्व रूपो धर्म्मः विशेषस्त्वया सम्प्रति समासादित
अतः पारिजात लतिकातोऽप्यधिकासीति भावः॥ अथवा हे वल्लि !
यि लतिके यस्यास्ते कलिका लावण्य मधुमयी लावण्यं शोभा विशेषः

कालिन्दी । सखि ! कुसुमावचय समय समुपजनित निविड घर्मजल भरोऽसह्यवेविरादव समखेदखिन्नान्त इयन्तं तुमं परिरद्ध कामो उवसप्पइ एसो णव णवप्पसूण रिद्धद्द परिमल सीतल फुफ़को दक्खिणो मारुणो । (२४)

मल्लिका । यानन्दं । किं महासाघो मारुणो । इति सम्भ्रमत्वात् निष्क्रान्त ।

मारुतः । सहर्षं । अहो प्रसादातिशयो भगवतो मन्मथस्य । यदिमम्भकल प्रसरणं मनोरथानामप्य गोचर मानन्द मनुभावयति । सोच्छ्वासं ।

(२५) सोऽहं सत्यं जगति सुभगम्भावुको मारुताख्या
साम्याच्छ्रुत्वा मदभिगमनं प्रस्तुते यत् समीरे ।
उत्तिष्ठन्त्यावलत् कुचभरं सम्भ्रमोत्सुकत् हर्षे
प्रेमग्रीडाग्रवलनयनं वक्त्रमीक्षे मृगाक्ष्याः । (२६)

सत्यमुक्तं कालिन्द्या मारुतः परिरब्धु काम इति ।

इमामाकाङ्क्षेऽहं किमपि परिरब्धुं प्रणयिनीं
शनैरारोप्याङ्कं स्मरकुतुकलज्जा परवशां
इदं पूर्वस्पर्श प्रचुर पुलकोड्डामर घन
स्तनाभोगां वालामुरसि सदयं निर्दयमपि ॥ (२७)

---

(२४) सखि ! कुसुमापचय समय समुत्थित तुङ्ग निविड घर्मजलभारवह्न वेपदवलम्बखेदक्लिन्नमुखचन्द्रां त्वां ।

(२५) सोऽहमिति ॥ सोऽनवद्या विशेष मनोहर महदर्थविलोकिता हं जगति सुभक्ष्यं भावुकः असुभगः सुभगो भवतीति सुभगम्भावुकः रिं मुख शालादिना शुकात् ॥ ऐश्वर्यमधिगच्छमान इत्यर्थः । भग त्य योनीच्छा ज्ञानैश्वर्येषु चेष्यते इति पुरुषोत्तमः । तदार्थी भवत्

मारुतः । विलोक्य । सानन्दं । सत्यमुक्तं भ्रमरकेण उत्त
रीयाञ्चले दृष्टः प्रतिच्छन्द इति ।

दयितास्तनपरिरम्भ क्रीड़स्वच्छन्दमाः प्रतिच्छन्द ।
सत्यं त्वमेव धन्यो न वयं तद्विरहदहनदग्धाङ्गाः ॥

नवमा । निश्वस्य । भट्टिदारिए मेअकत्ति ओ समग्गो
अदिवाहयिज्जो । णं कसिण वक्कचन्द मुत्तिव्व दिणे परि
त्थारिअ परिक्खणा लाअस्य मेत्त सेसा एसा दे तणु वट्टो ।
इदो वरं ण कालक्खेवा सहो विरहिं जणासुवला मोडि
हरण णिग्घिणव्वा वारो मम्महो । णं जाणोअदि अस्स
मम्मिजाम्मिन्दिअहे खणे खणे परिवडिदेह्मि अत्तणोवि अव-
सादो विषसिअ मन्दमहुरमुद्द मन्थर त्थिमिअ तरङ्गणाकुणि
उक्कखिदएहिं सविलास घोलिर सिणिद्ध कणोणिआ चुम्बिअं
चलमहा कुवलअकवोल मण्डलेहिं उद्दाम कोमल लज्जा-
णुवड्ढिअ गमणा गमणेहिं दिट्ठिवाएहिं तक्काल सज्जिव
मअरद्धअ धणुम्मुक्क तणुमम्मकलम्ब कअम्बअ पुङ्ख सङ्कुअ
णिज्ज घोरअ बन्धूल फुलउब्भेद जज्जरिज्जन्तसेअ सलिल
संखालिअं गराअ वाअड लाअखाहि समाए भट्टिदारि-
आए दिट्ठी तारिसावत्थो सोजण णअण णिम्माण वम्महो
मारुओ । तदप्पहुदि तच्चिन्तालम्बणं हिअअं तप्पडिच्छन्द
दंसणा लम्बणं णअणं तव्भूसण धारणा लम्बणं सरीर
तन्नाह पच्चासा लम्बणं जीविअं धारयन्ती बलित्तवारणम
विज्जु मालेव्व कम्पण सलाआविअ पड़िक्खीणावि विसेस
रमणिज्जा होइ । अविअ भवणक्कण चङ्कमणो सह वस
णसवावि मणिसोपाणपरं परारोह कम्मिरत्थणरमस

...र कोइल कलविलासविसमं भंकार जम्पम मञ्जुल
सीअल सुहरं पवन कुडुङ्गं वरमणेन पविसिदुं मादलवदी ॥

कालिन्दी । सभाख्यं । कर्णौपिधाय ण इदोवरं सुणिस्सं
साहससीलाए वुत्तन्तं ।

नव । अह भट्टिदारिए जइ एव्वं एदा उव सव्वा
आवक्षं पविसन्तुत्ति किसलपडिसाणाणं चरणंबुज पहल केस-
रम्भं पणामंतीणं अम्हाणं सहीणं निव्वन्धेण दक्खिण
हिअआ कहंवि पत्थाणोदा ।

मालतः । सानन्दं सकरुणञ्च ।

अस्या निश्वस्य निजजीवित निर्व्यपेक्षाः
प्रेमप्रकर्ष पिशुना ललिता विचेष्टाः ।
हा हन्त घोरमदनज्वर गाढ़ तप्त
मामोदते मम मनः परिदूयते च ॥ (२१) ॥

अहो महानयं प्रमादः ।

नव किसलय मुग्धं गात्रमेतन्मृगाक्ष्याः
पवनचलित जातीसूनपातात् सहिष्णु ।
अपि कुलगिरि कूटस्थेमभाजां जनानां
अहह विमथन चण्डामाव्यथास्त पृषट्काः ॥

---

(२१) अस्या निश्वस्य इत्यादि। मम मनः कर्त्तृ आमोदते सन्तुष्यति परिदूयते खिद्यति च । अत नायिकायाः स्वविषयक प्रेमप्रकर्ष पिशुन चेष्टा अवणात् स्वमनस आमोदः । निजजीवित निर्व्यपेक्ष चेष्टा श्रवणात् खेदः । इति साभिप्रायत्व चेष्टाविशेषणद्वयस्य अतः परिकरोऽलङ्कारः ।

नव। किं बहुणा पुणो पुणो पट्ठाअं मुह कण्ठलग्गं जीविअंवि एसो महाभाअ वच्छट्ठल संगम सुहओ हारो एव्व सव्वंवि कण्ठलग्गो वट्टइ ॥ इति मल्लिकाया कण्ठे हारं दर्शयति ।

मारुतः । सस्पृहं ।

ब्रूहि ब्रूहि प्रियसख ममाप्यम्बुभाजा त्वया प्राक्-
मुक्ताहार स्थिरविरचितं तत्तपस्या प्रकारम् ।
येनोत्कण्ठा धवलिमधुरे कण्ठमूलेषु सक्ताः
सारङ्गाक्ष्याः स्पृशसि हृदयं श्लिष्यमाणस्तनाभ्यां ॥ (३२) ॥

नव। अञ्जलिं बद्धा मल्लिकां प्रति। सहि वसिमणं कुलग्गं णाआणंविगन्धव्व विवाहा सुणिज्जन्ति तेसु तेसु इतिहासेसु। ता पेसणिज्जा अहं कालिन्दी वा आणइ खामो गूढं तुइ हिअअ वल्लहं जणम् ।

मल्लिका। सनिश्वासम् । अपरिक्खिदाणुराए तस्सिं

(३२) ब्रूहिब्रूहीति। ब्रूहि ब्रूहि इत्यादरात् द्विरुक्तिः। मुक्ताहार इति माल्य सम्बुद्धिः। अन्यत्र मुक्तः आहारो येन तस्य सम्बुद्धिः। अत्र मुक्ताहारं प्रति मल्लिकायाः कण्ठमूल स्तनहृदय संसर्गरूप फलप्रदः कोनु तपो विशेष स्त्वयानुष्ठित इति मारुतस्य प्रश्ने प्रस्तुते अप्रस्तुतः। प्राग् जल मध्यवर्त्तनेन गौरीशङ्कर चामुण्डादि मन्त्र-साधन तपस्या मनुष्ठाय तत् फलतया कामपि साध्यनायिकां कण्ठपरु स्तनाश्लेष हृदय स्पर्शादिकामवेद विधि विधानप्रकारेण अनुभुञ्जानं कश्चित् प्रियवयस्य नायकं प्रति अन्यस्य अनाहार जल प्रवेशादिना प्राक् त्वदनुष्ठित गौरीशङ्कर तपस्या प्रकारं मम ब्रूहीति सादर मनुनयः प्रतीयते। इति समासोक्तिरलङ्कारः।

अये कहं णु पेक्खिअइ जइ सो अवसरस्स विअणो हवे-
दाणो वरअस्स (प्रवर) चाअअं एव्व सिक्खइ ।

मारुतः । साकूतोयम् ।

मा मा त्वदेक जीवितं आशङ्केथाः स्वमन्य सक्तं माम् ।
इच्छत्येरण्डलतां लोलम्बः किन्नु कमलिनीं लब्धुम् ॥(२३)॥

कालिन्दी । स्वगतम् । एदाए अप्प णामधेहिं पइट्ठुण्ण सव्वहा पणयो होइ । प्रकाशम् । णं भणामि पण्णासिदं एव्व अणुराअ सव्वस्सं पुणो सिहामणिदाणेणेत्ति । शिखा-मणिं करतलेन परामृशन्त्य । तदिदं हाटकेति पठति

मारुतः । अहो विधेरतिदुर्घटस्यापि घटने पटीयस्ता । क्वायं सिंहलद्वीपस्थो मणिः क्वेयं मगधपुरमण्डने मल्लिका । मणिं प्रति ।

आवां द्वावपि रक्तौ नव पुनरन्या शिखामणे नियतिः ।
यत् सुरभिनीलमस्याः कचाञ्चले नाकृकान्तमाप्नोसि (२४)॥

---

(२३) मामेति । पूर्व्वार्द्धस्य स्पष्टोऽर्थः । तथाहि लोलम्बः भ्रमरः कमलिनीं लब्धु इच्छति । इति काकुः। किन्तु आहोस्विद् एरण्डलतां लब्धुमिच्छति इति योजना । दृष्टान्तोऽलङ्कारः ।

(२४) आवां द्वावपीति । रक्तौ अनुराग विशिष्टो वर्णविशेष विशिष्टश्चेत्यर्थम् । अत्र शिखा मणिं प्रति आवयो रक्तत्वेन साम्येऽपि सुरनीव नायिकाकच स्पर्श प्राप्तिरूप विधि सहायवत्तयात्वमुत्-कृष्टोऽसीति मारुतवचने प्रस्तुते यथाविधायिकया सह कचस्पर्शस्य स्वयोग विशेषमनुतिष्ठन्तं कश्चिन्नायकं प्रति अन्य नायकस्य असूया-वचनं अप्रस्तुतं प्रतीयते इति समासोक्तिः । समासोक्तिः परिस्फूर्त्तिः प्रस्तुते ऽप्रस्तुतस्य चेदेति लक्षणात् ।

नेपथ्ये। कालिन्दि! अत्थि भअवदीए आदेसो।

ततो आकर्ण्य। सारिसि आए विअ घरो॥

कालिन्दी। मए भअवदीए आहूदम्मि। ता झत्ति गच्छम्मि।

मारुतः। आकर्ण्य सविषादं। अहो विधेर्वैलोम्यम्।

तृषितचकोरकचञ्चौ पतिता यच्चन्द्रिकेव जलदेन।
अपनीयतेऽचिरपथतश्चिरकाङ्क्षित लब्ध दर्शना सुमुखी॥

ततो निष्क्रम्य लतागुल्मान्तरिताः प्रविशन्ति।

मल्लिका। कालिन्दि! अवि सव्वं मारुओ एत्थ वट्टइत्ति।

कालिन्दी। कहं भणिस्सदि सारसिआ।

नव। सहि! अज्ज सोम सरम्मि णहादुं गच्छन्तीए एदाए किं णु तुह कधो कहिअं।

कालिन्दी। स्वगतम्। ण कहइस्सं सव्वरअस्स अविणाअं उब्भिस्सं खु मन्तवीजं ण फलस्स कप्पइ। प्रकाशम्। णं एदं एव्व अदिमुत्तलआमण्डवे णिउढो वट्टइत्ति।

मारुतः। हन्त गतैव मल्लिका ससखी। निर्गच्छति।

मल्लिका। हृष्टा सहर्षम्। हन्त जलहर मण्डलादो विअ चन्दो णिग्गओ लआमण्डवादो मारुओ। सखेदम्। हन्त एक्कोएव्व। णं हिअअं मण्डव सञ्चारिणीए पिअसहीए एव्व सहाओ मारुओ।

मल्लिका। अहो मणोरहाणं आदिप्पसङ्गो।

कालिन्दी। कोएत्थ अदिप्पसङ्गो। णं तुमं एव्व दट्ठु कामो वञ्जिअ सअल परिअणो लआ मण्डवविजणो एत्थ एक्को एव्व वट्टइ।

मल्लिका। स्वागतम्। हुं जइ एव्वं आअच्छिदाइ क्खु-
णेण धीरहि अएव णेण घवलाइं अआणं वअणाइ।

नव। सहि अह्येवि सुणिसम्मामो एदस्स मअण्ण
अर गाढ़तमस्स तारिसाइं एव्व वअणाइं।

मल्लिका। सप्रत्याशम्। अवि एव्वम्। निर्वर्ण्य। सहि
मज्ज पडिक्कूलं अणुहरइ एसो। संस्कृतमाश्रित्य। वर्णा-
न्तरेणेति पठति

मारुतः। सोत्कण्ठम्।

प्रश्नमिको घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य।
आकस्मिकेन सा पुन रपनीता क्वापि पवनेन। (२५)

नव। सखि। अविसुदं महाभाअस्स वअणम्।

मल्लिका। णोमालिए! अणिव्भिणाभिप्पायं क्खु एदं।

मारुतः। स्मरपीड़ां नाटयन्। यावत् तस्याश्चरणाम्बुजा
क्रान्तदेश माश्रयामि।

मल्लिका। सायंबम्। का णाम तक्कइ ण सम्भाविअदि।

मारुतः। परिक्रम्य। अत्र कुसुमान्यपचितानि
मल्लिकया।

मल्लिका। सपुलकम्। स्वगतम्। अह्महे मह्णामग्गहणे
मिसेण रोमञ्चिआ तणुयट्ठी।

---

(२५) प्रार्थमिकोति। इह अप्रस्तुतेन शिखिवृत्तान्त कथनेन मारु-
तस्य स्वकीय गाढ़कठोर स्मर सन्तापानन्तर कस्य प्रथम दर्शनाया
मल्लिकायाः मन्दाकिन्या ह्लान रूप प्रतिबन्धकवशात् निर्गमनरूप प्रस्तुत
वर्णनं प्रतीयते इत्यतोऽप्रस्तुत प्रशंसालङ्कारः। अप्रस्तुत प्रशंसा स्यात्
सा यत्र प्रस्तुताश्रया इति लक्षणात्।

मारुतः ।

एता धन्यतमा लता नखमुखैः सूनानि संगृह्णती
सा सर्व्वाङ्ग सुगन्धिरिन्दुवदना याः स्पृष्टवत्यात्मना ।
वृन्तग्रन्थिषु तत्र तत्र लगता मद्यापि माध्वो लिहां
रावैर्हन्त रुदन्ति तत् करतलस्पर्शेन दूरीकृताः ॥ (२६)

मल्लि । मडुर मडुरं वणिउं जाणइ महाभाओ

मारु । अधो विलोक्य ।

लाक्षाङ्कैरनुमीयते तत इतः सुव्यक्तमग्राङ्गुलि
न्यासैरत्नलताग्रपुष्पहरणे यत् तत् पदाग्रस्थितं ।

अन्यतो विलोक्य ।

एता हन्त परिच्युता सुमनसो मत्तालिमालाभय
व्याधूतात् करपल्लवादिह पुनस्तस्याः कुरङ्गी दृशः ।

मल्लिका । सलज्जस्मितम् । अम्महे सव्वं पच्चक्खो विअ एव्व महाभाएण ।

---

(२६) एता इति । नख मुखैः सूनानि संगृह्णती सर्व्वाङ्ग सुगन्धिः इदं साभिप्राय विशेषणं पद्मिनीत्वादिति भावः । बहुल सुरत पयसि यस्याः सौरभं दिव्यगन्धं इति । सा इन्दुवदना मल्लिका या लताः स्पृष्टवती अतएव धन्यतमाः एता लताः इदमेव कष्ट तस्याः मल्लिकायाः करतल स्पर्शेन दूरीकृताः विरहिता सत्यः तत्र तत्र वृन्त ग्रन्थिषु तत् करतल स्पृष्टेषु निखिल कुसुम-बन्धनेषु अद्यापि स्वनतां कूजतां नायिकायाः सर्व्वाङ्ग सुगन्धितया तत्करतल स्पर्शेन वासनावत्सु वृन्तेषु गुञ्जतामित्यर्थः । अन्यथा वृन्तानां गन्धाभावात् गुञ्जनानुपपत्तिरिति भावः माध्वीलिहां आत्मना भ्रमराणां स्वरूपेण रुदन्ति इति मन्ये इत्युत्प्रेक्षा हन्तेति खेदे ।

नव । सहि ! किं अज्जवि अविब्भिणो एव्व अहि-प्पाओ ।

मल्लिका । सव्वाआर महुरस्स पिसम्म पेसलेहिं आ-लावेहिं णासंकिज्जइ उब्भिणो विसेसिणदुम् ।

मारुतः । स्मृत्वा । अयि प्रियतमे ! मल्लिके ! सर्वथा अनाश्वास शीलासि । यतस्त्वत्कटाच लवप्रतीघस्यापि मम हृदय मन्यसंक्रान्त माशङ्कसे ।

सख्यौ । सुणादु तस्स हादो एव्व पिअसही ।

मल्लिका । सहर्षम् । महाभाअ ! अज्ज आसासिदं एव्व जं पियदमासद्देण अक्कारिदह्मि ।

मारुतः । तदिदं त्वदङ्गकेष्वेव परिवर्त्तमानं कथं नाम न जानीषे । तथाहि मे ।

लग्नं पादतले नखेषु विलुठत् संसक्त मूर्वोर्युगे
विश्रान्तं जघनस्थले निपतितं नाभौ सरोमण्डले ।
शून्यं मध्यमवेक्ष्य रोमलतिका मालम्बमानं क्रमा
दारूढ़ं स्तनयोः प्लुतं नयनयोर्लीनं मनः कोपिके ॥ (३७)

मल्लिका । आकाशे । भअवं णिक्कारण कारुणिअ रद्दु रमण पमज्जिओ एव्व तुए (३८) अवालाजन दंसि एक्कं

---

(३७) लग्नमिति । मनःकर्त्तृ नयनयोः प्लुतं मण्डूकवत् किञ्चिदुड्डीय पतितमित्यर्थः । तथाचास्य मनसः एवंकमानव स्थिति प्रतिपादनेन उन्मादः सूच्यते ।

(३८) अपालाजनेषु अतितरुणी जनेषु दर्शितं खलु एकान्त निठुरं त्वं नियमेन क्रूरत्वं तेन निरूढ़ विरुढ़ः प्रवादः अपवाद इत्यर्थः । (अपाला

तस्थिट्ठुदत्तण विरूढ़ो पवादो जेव एव्वं ठ्विदावि पव-
ड्ढमणाविवि सुणावेदि ।

मारुतः । परिक्रम्य । तदेतत् प्रियतमा वकुल चन्द्र-
लतामूलम् । यत्र नवमालिकया वर्णितो रमणीयो कुसु-
मम्दष तस्या मान्मथो व्यतिकरः । यावदत्रोपविश्यामि ।
रमिनाय्य । सखि ! नवमालिके ! ।

नव । भट्टिदारिए ण सक्कुणोमि मन्दाभाएण जन्ति
णामावि आणवेहिन्ति उपसप्पिदुं ।

मल्लिका । मा मा पचावेहि सुणिम्हामो खलं एदस्स
वीसं आलावम् ।

मारुतः । पश्य ते प्रियसख्या उपालम्भं । यत् पर-
व्यसमानभिज्ञं मां मन्यते । न मन्यते पुनर्मामप्यवाङ्-
मनस गोचर ममुमनङ्ग ज्वरोद्दाहं ।

(१८)मया विश्रूयन्ते श्रवण पक्षाः कोकिलरवाः
समीराः सह्यन्ते चलित नव माकन्द कलिकाः ।

---

कीर्त्तितानि तरुणीत्यत्र मूले इति मद्वत् प्रयोगः) एतस्य वीर्य्यं मनः
कैयिके दुर्खादिकाऽनेक विधसदुपरचित वाधा वाहुल्य सूचक मत्
प्रियतम व्याहाराणां श्रूयमाणत्वेन तव युवपुरुषेष्वपि नितान्त निष्ठुरत्व
कुटीभावात् त्वं युवति जनानेव निर्दयं पीड़यसि नैवं युव जनानिति
प्राक्तनोऽपवादस्तव मिथ्याभूत एव समभवदासीदिति भावः । निष्कारण
कारुणिक इति सम्बुद्धा एवंविध प्रणयिवचन श्रवणहेतुत्वेन त्वया
मम बेह्लोपकारः कृत इति भावः ।

(१८) मया विश्रूयन्ते इत्यादि मूर्च्छाव्यतिकराः मोहविशेषाः मम

तया निस्तोयेऽन्ते शिशि शिशि सुधा पिच्छिलकरे
समिन्धाने यस्मै कति कति न मूर्च्छा व्यतिकराः॥

मल्लिका। साकूतम्। अम्हहे मह किदे तेल्लोक्क मङ्गल
न्दिरंगस्स एदस्स एआरिसं वअंस्सन्ति ण जाणिदं मए।
न्मस्स ! अहवा आणन्तीवि किं करेमि।

नव। जनान्तिकम्। कालिन्दि! एसा खु भट्टिदारिआ
क्खिअ मादआपुरात्रो गुरुअणे वये वट्टन्ती ण पारेदु
अं एव्व अप्पाणं समप्पिदुम्।

कालिन्दी स्वगतम्। जुज्जइ सरिसं खु एदं विसुद्धस्स
लकस्सआ सहावस्स। अविदु कालक्खे वा सही मअ-
इओ। ता एव्वं भणिस्सं। प्रकाशम्। सहि मल्लिए एव्वं
णुरत्तो तुइ समल जण याअणाणंदो महाकुलप्पसूदो
ारिओ पलआणलकप्प कंदप्प सरपडणा ढ़ज्जन्त सुउमारङ्गो
लिअं खु किलं मइ। ता जइ खणंवि उवक्खिज्जइ
से अणुवंद एव्व मोहोवा अस्स किम्बिवा भविस्सदित्ति।

मल्लिका। सखेदं। मा मा अमङ्गलाइ संकेसि। इति
ाब्यं ध्यायति। प्रविश्य चित्रफलकहस्तो भ्रमरकः। णाह!
ःव्वगन्धेण लोआ मां जाणइत्ति मालिआ णाणीदा चित्त-
लअं उण एदं। इत्यर्पयति।

मारुतः। भ्रमरक! उपायज्ञोऽसि। इति चित्रफलक-

---

समानि इत्यर्थः। अथ व्यतिकरः पुंसि व्यसन व्यतिषङ्गयोरिति
दिनी।

मादाय । यावत् यथा सख प्रियतमा दर्शनयोग्य मे
मामन्त्रयामि तत् प्रतिच्छन्ददर्शनेनापि । निर्वर्ण्य वति ।

कालिन्दी । मवे तं एव्व एदं चित्तवत्थं जं भमरक
कहिअं । सर्व्वाः सविस्मयं पश्यन्ति ।

नवमा । पेच्छ पेच्छ अच्छेरं विमउत्तिअ सहस्स मच्छिं
कोवि कोवि गिरोन्दो लिहिओ । प्रणिवैवर्णं । तस्सिं
हंसकवलिअ विमल सलिलो कोवि णिज्झरो वि । सखेम
एदस्स उण तीरज्जणवरम्मि अदिट्ठ पुरोहिं दिव्वरूवा
सहअरीहिं परिवुदा पिअ सहीवि एसा ।

मारुतः । भ्रमरक ! एतद्दर्शनादारभ्य विस्मय स्तिमि
मे हृदयं । कथं द्वीपान्तरस्थेन चित्रकरेण मल्लिका दृ
कथञ्च सा दिव्यजनवं क्रमोचिते पर्वते लिखितेति । पश्य

शैलेन्द्रो हिमवानयं प्रतितटं विद्याधरै राश्रितः
क्रीडद्दिग्गज गण्डदान कलुषा सेयञ्च भागीरथी ।
अस्यास्तीर लता गृहे पुनरसौ मध्ये सखीमण्डलं
क्रान्ता कन्दुक खेलनेन लिखिता मज्जीवितं मल्लिका ॥

मल्लिका । सोत्कण्ठा करणं । अच्चहे चिरपरिहूओ वि
एसोपदेसो एदाओ पिअ सहीओ ।

नव । सासूयमिव । अम्मो कहं ण लिहिआ प
सही मण्डले ।

भ्रम । सञ्चं भणिदं णाहेण । गन्दुअखेलणेण हि
लिन्ते ति । एदाए उण पअम पाडलम्मि करअले कम
विअ राजहंसो लक्खिज्जइ मोत्तिअ गन्दुओ

मारुतः । निर्वर्ण्य सस्पृहं ।

सख्यौ। सहि! अज्ज तुमं एव्व परव्वसणं ण जाणासि।

भ्रमरकः। णाह! णं भणामि पड़िच्छन्दो एसोत्ति।

मारुतः। सखेदम्! किं प्रतिच्छन्द एव। हन्त!

अतिदुर्लभां सुधांशोरम्भः प्रतिबिम्बितां मूर्त्तिम्।
च्चापलमस्यनुकृतवान् बालस्यादातु कामस्य॥

सोत्कण्ठा मोहसन्तापम्।

आश्लिष्टः प्रलयानलैः किमथवा स्पृष्टः पटीरानिलैः
आहोस्वित् परितो हतोऽस्मि सकलैः सम्भूय चन्द्रातपैः।
जाने नाहम किं यथा न विभवः कोऽप्यङ्गमङ्गं दहन्
रुन्धानः करणान्युदेत्य विरतं तापोनु मोहोनु वा॥(४१)

सोन्मादम्। भ्रमरक! कोऽयं प्रदेशः

सर्वाः। सावेगम्। अम्महे महन्तोखु पमादो।

मल्लिका। सहीओ ण जाणे किं मए दाणिं कादव्वंति।

भ्रमरकः। सभयं। णं वसन्त वणुज्जाणं एव्व।

मारुतः। परितो विलोक्य। युज्यते एतत्।

अयमयं हि तरुणा माकन्दतरोर्मूले॥ (४२)

---

(४१) आश्लिष्टः प्रलयानलैरिति। अहं न जाने इत्यन्वयः। किन्तु यमानमिदमित्याह। अकिम्पचान विभवः अद्भुतमहिमा कोऽपि निर्वचनीयः अङ्गमङ्गं प्रत्यवयवं वीप्सायां द्विरुक्तिः। दहन् करणानि इन्द्रियाणि रुन्धानः विषयेष्व प्रवर्त्तयन् तापः ज्वरो नु मोहोनु वा तिः रथ्युक्त गुणवैशिष्ट्र्योऽतुल्यत्वादन्यतरत्व शङ्का अविरतं उदेति अन्वयः।

(४२) वसन्त वनोद्यानत्व मभ्युपेत्य तत्र हेतुमाह। अयमयं हि

सन्धाय पञ्चबाणं भ्रमं कुर्व्वन् मौर्व्विकार्म्मुकं मदनः ।
कर्षति रतिकुचमण्डलकाठिन्याद्वैतसाक्षिणा दोष्णा ॥
(४२) अमुमुपरोद्यत मेनं यावत् क्षणविलम्बाय प्रार्थये ।

साञ्जलिबन्धम् ।

अयि शृणु चरमं मे प्रार्थनं पुष्पकेतो-
र्व्वणमिव विरमास्मादुद्यमादञ्जलिस्ते ।
सकृदवहितबुद्धिः स्वाम्रदन्ताम्बरं तद्-
वदनमलसनेत्रं मल्लिकायाः स्मरामि ॥

इति नयने निमीलयन् मोहं नाटयति ।

---

तरुण माकन्दतरोर्मूले सन्धायेति । हि यस्मात् अयमयं इत इतो दृश्यमानः (इति हस्ततो निर्देशः ।) त्वासाद्विहन्तिः । उभयत्रोक्तञ्च । इदमस्तु सन्निकृष्टमिति । संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोग इति च । मदनः कर्त्ता तरुणमाकन्दतरोः तरुणचूतवृक्षस्य मूले पञ्चानां पूरणं पञ्चमं नान्तादसंख्यादेरिति डटो मट् । तञ्च तत् अस्त्रञ्च तत् सन्धाय संयोज्य । कार्म्मुकं धनुः कर्म्म भ्रमं कुर्वती मौर्वी यस्मिन् कर्म्मणि तद्यथा भवति तथा भ्रमं कुर्वन्मौर्वि । अथवास्य कार्म्मुकविशेषणत्वेनान्वयः । रतिकुचमण्डलकाठिन्याद्वैतसाक्षिणा स्वप्रिया स्तनमण्डलकार्कश्या-ऽभेदशंसिना स्वानुभूत तत् कुचमण्डलकाठिन्यसदृशकाठिन्यप्रकाशकेनेति यावत् । स्वस्य अविरहित्वाद्विरहिदुःखविचारं विना क्रौर्य्यं धुरं धरेणेति भावः । दोष्णा करेण कर्षति तस्मात् युज्यते एतदिति पूर्व्वेण सम्बन्धः । भ्रमं कुर्व्व भ्रमरसमूत कुसुमपूरितमाकन्ददर्शनादिव उक्तिरिति बोध्यं ।

(४२) यावत् प्रार्थये निश्चयेन प्रार्थयामीत्यर्थः । यावत् पुरेत्यादिना यावदिति निश्चयार्थको निपातः लट् च ।

मल्लिका । सकरुणानुराग सम्भ्रमावेगम् । हन्त मुज्झन्तो विअ दीसइ । सर्व्वाः सत्वरमुपसर्पन्ति ।

सख्यौ । सहि । धारेहि उअं णेण ।

मल्लिका । सपुलक मङ्के धारयति ।

भ्रम । दृष्ट्वा सानन्दम् । प्रणम्य । स्वगतम् । एदावि दूह ठिआ । प्रकाशम् । दिट्ठिआ संपत्ताही तत्तहोदीओ ।

कालिन्दी । णोमालिए । करअल मलिअकप्पूर पल्लव सारेण णिगाल देसे सिञ्चह्म । उभे तथा कुरुतः ।

भ्रमरकः । णाह पड़िबुज्झध्व णं तत्तहोदीए मल्लिआए सअं धारिओसि । पुव्वंवि तेसु तेसु मुज्झाअ मेसु एदाए णामग्गहणा मेत्तेणेव्व पड़िवुज्झसि ।

मल्लिका । सकम्पं करतलं वक्षसि निधाय । महामात्र ! किं ण सुणिज्जइ भमरअस्स वअणम् ।

मारुतः । प्रबुध्यमानः सरोमाञ्चम् । स्वगतम् ।

स्पर्शं एष हृदयङ्गमः सुधावर्षवद्वपुषि को विभाव्यते ।
चन्द्र चन्द्रमणिहार मालती गन्धसार घनसार शीतलः ॥४४

चक्षुषी उन्मील्य पश्यति ।

सखी । सहि ! दिट्ठिआ वड्ढामो जो णाहो

---

(४४) स्पर्श एष हृदयङ्गमः सुधेति । चन्द्रश्च चन्द्रमणिहारश्च मालती-जातीकुसुमानि च गन्धसारः चन्दनरसश्च घनसारः कर्पूरश्चेति द्वन्द्वः । तद्वत् शीतलः उपमानानि सामान्यवचनैरिति कर्म्मधारयः । मद्रूप-मालङ्कारः । यदुक्तं । अनेनैव कविनान्यत्र चन्द्रनोदक चन्द्रांशु चन्द्रकान्तादि शीतलः । स्पर्शस्तवेत्यतिशयं बोधयन्ती वद्रूपमेति ।

णिक्किओ विअ कुमुदा अरो पड़िवुज्झो महाभाओ ।

सर्वाः हर्षं नाटयन्ति ।

भ्रम । सानन्दम् । णाह मुज्झा अमे लोअण णिमी-
लिणेण सुविए दूमादो वल्लोणि उंजादो झत्ति सदअ
सम्भमं आगदुअ लम्बिओसि तत्तहोदोए ।

मल्लिका । लज्जां नाटयति ।

मारुतः । सहर्षम् । हन्त न गतमेताभिः ।

उपकृतं मयि मूर्च्छे यत्त्वया स्वीकृतेम-
व्यगणित गुरुशङ्काव्रीड़मासाद्य सद्यः ।
वहल पुलक पाली पक्ष्मलोत्तुङ्गपीन
स्तनकृत परिरम्भं कातराच्या धृतोऽस्मि ॥ (४५)

नेपथ्ये । भो भो जनाः ! पलायध्वं पलायध्वम् ।
एतौ द्वावपि तर्कितावपि मदौ विद्राविता धोरणौ
धावंधावमितस्ततः पथिजनान् व्यापादयन्तौ रुषा ।
वेतण्डौ पृथुदन्त दण्ड विकटावुच्छृङ्खला वेनयो-
रेकः सोम सरः परस्त्विह वसन्तोद्यान माढौकते ॥

सर्व्वे आकर्ण्य ससम्भ्रममुत्तिष्ठन्ति ।

मारुतः । विलोक्य । अति कष्टं वर्त्तते ।

दूरान्निर्धावमानानपि लघुगमनः पृष्ठतोऽनुद्रुतः सन्
उच्चैः फोट् कारदानश्रवणनिपतितान् सङ्घशः सङ्घशोऽयम् ।

---

(४५) उपकृतं मयीति । अगणिते गुर्व्वौं शङ्काव्रीडे यस्मिन्
कर्म्मणि तद्यथा भवति तथा अगणित गुरु शङ्काव्रीडं सद्यः समाप्
साद्य इत्यन्वयः ।

पादाघातान्तदेहव्रुटन घट घटत् कुर्व्वदस्थिप्रमथ्यम्
मौषादन्तोषसान्धः किमपि तनुमतः पिष्टपेषं पिनष्टि॥

भ्रम। भ्राव! एसो णिव्भररो सविव्भिस देहु प्पाडिम
पाडलं तमाला वेड़िअ कराल दन्त मुसलो साअर मज्भ
वेला विलग्ग विज्जुमण्डल मण्डिअ सिङ्गोविअ मच्चरो
उब्भिज्जन्त गण्डमूलहोरन्त मुदुर भमरसण्ड अपडिण्डिम
घोस सूदुआ अमणो अड्ठणुड्ढिआ दुट्ठ लोहसिङ्खला
खलखला भन्त चलणो ईसि चउरिअ पिङ्गल लोअणा
भीसण मुहाभोओ इदोमुहं एव्व आअच्छइ दुट्ठ वारणो।

सर्व्वाः सकम्पम्। महाभाग! परित्ताअदु परित्ताअदु।

मारुतः। माभैष्ट। अहमेनं निवारयामि दुष्ट वारणं।

इति सत्वरं बद्ध परिकरो निष्क्रान्तः। (४६)

मल्लिका। सविषादम्। हलि हत्थि अहिमुहं धाविओ
एव्व महाभाओ।

भ्रम। सहर्षम्। हन्त दूरप्पसारिअ सुण्डादण्डं सो-
वाणं कदुअ आरूढ़ मत्थएण णाहेण कक्खमूल घड़िअ णिट्-
ठुरं गुट्ठपीड़ण भरोम्मुक्क फिक्कारं णिवट्टिओ एव्व
दुट्ठ गओ। जाव अहंवि पिट्ठ हो होमि।

इति निष्क्रान्तः।

सर्व्वाः। हं णअणपहं अदिक्कन्दा एदे।

---

(४६) सत्वरं बद्ध परिकरो निष्क्रान्त इत्यत्र। बद्धः परिकरः दृढ़तर गात्रिका बन्धो येन स तथाभूतः सन् इत्यर्थः। भवेत् परिकरः सङ्-घर्षे च परिवारयोः प्रगाढ़ गात्रिका बन्धे इति मेदिनी।

पुनर्नेपथ्ये।

इह रमयन्तिका लुलति सीमसरः सलिले

अहह तदन्तिकं झटिति धावति दन्तिवरः।

सर्व्वाः। हद्धि हद्धि हा सहि रमअन्तिए! कहं कमलिणी विअ कुञ्जर हत्थगआसि।

पुनर्नेपथ्ये।

शिवशिव खाद काण्ड शतकोटिरिवाद्रितटे।

निपतति मस्तकेऽस्य कलकण्ठ मृगाधिपतिः॥ (४७)

सर्व्वाः। आकर्ण्य सविस्मयम्। साहु कलअण्ठ! साहु।

पुनर्नेपथ्ये। सहि रमअन्तिए! मा मा भीलुआ होहि दूरं णीदो एव्व कलअण्ठ कण्ठीरवेण दुट्ठगओ।

सर्व्वाः। श्रुत्वा। एदं सारसिआए आसासण वअणं।

कालिन्दी। सहि मल्लिए जीविद संसआदो मुक्कं रमअन्तिअं आसासह्म। इति निष्क्रान्ताः सर्व्वे।

इति तृतीयोऽङ्कः।

---

(४७) शिवशिव खाद काण्ड शत कोटिरिवाद्रि तटे इत्यत्र। अद्रितटे खात् गगनात् अकाण्डे अकाले जातः शतकोटिः अशनिः इव अथवा न विद्यते काण्डः कालः यस्य सोऽकाण्डः अजलदकाल इत्यर्थः। स चासौ शतकोटिश्च अकाण्ड शतकोटिः आकस्मिकाशनिरित्यर्थः। सह इवेत्युपमा। अस्य गजस्य मस्तके कलकण्ठो मृगाधिपतिः सिंह इव कलकण्ठ मृगाधिपतिः निपतति अवितर्कितः कुतः प्राप्तवानिति भावः।

इति तृतीयोऽङ्कः।

## अथ चतुर्थोऽङ्कः ।

ततः प्रविशतौ हस्तिपकौ ।

एकः । अहे वव्वलअ ! हि माण हे दंअपद्म कण्ठकुण्का-सुमाहणाह अम्बलअ लाह भण वेक्किद दोरिअअदि जुठ-च्छदे उअ मे । जं चंदओअलं अहावेअ कंपं विवस्सलेलू-वलं चविजिदल दिवसहे । माकुदे मणुलत्ता लालि अक्के दुअतस्स गूढ़मणम्हि पवट्टसद् । पेसिस विलदो णिम्मद अघे एक्के एव्व वअन्त मणुष्ठाणं वि विअं देवेसि देलि चाल पुलिआ असकिदं गुणिअओ अधदाणेण कुत्तलाह उआदणे गणे तु मं वि णि उत्तह्म । सविस्मयम् । नह णाम उआदिदे लोआमलि अपलवसे मह वालणो तेण महा-पुलिशेण उआणादो झत्ति णिग्गदुआ लोलाणव्व आलूढे दूलुलकन्ते विवुदु हअव्वे दूल दूणं णीदे ।

वर्वरकः । धीह मुह ! माहु भणिदं तुए णाह अम्ब-लआ हअदि जु उच्छिच्छिदे उअमेत्ति । हीहिह्मो एव अले सेखु विसअ पुलिसेत्ति कथिदे लसो णहिं ॥

जे कलेदिअ च्छि लाअ मयजे मजलं तहिम मासु वहसु ।

सिंहमुखः । अह सोमसलं म्हि कलअंसो विधं धावि-दोव्व तुह वालणस्सका मवत्था ।

वर्वरकः । सेकुसलि लक्किलाविलो लव्विस्स पुलाअ उत्तं लमअन्तिअं घेत्तुकामो जलमज्झं पविठे ।

सिंहमुखः । सानुतापं । हद्धि लमअन्ति आवि तस्सिं एव्व वहेदि ॥

बर्बरकः । विहस्य । सिंघ मुह ! जाला तुह बाअदि उआआ पसिदे ताला मल्लि आवि तस्सिं एव्व वहेदि चिट्ठइ ।

सिंहमुखः । सोद्वेगम् । भीमाणहे किं मल्लिआव तस्सिं एव्व देसे सोत्थि जाह सब्बस आह वज्जए जदि उप्फुलदाविअ सित्थलेण घेप्पइ मल्लिआ ता सव्वे वि फुले एव्व लमअन्तिअं उद्दिसिअ वणालि दकले अण्णहमेत्तं तलिए दीगवट्टे हाकालमहलेसु लोएसु अवलिल्लादो चक्कन्दिअ मत्थए कलअणहे ण कण्ठीलवेण विअ ओघि वज्जिदे सणि जडणिअ डकाणाअं एव्व धाविदे ।

सिंहमुखः । हीमाणहे कुव्भ लाविअ अवहिदा एव्व । विहस्य । हीहि भाइदुं गहीदह्म अध कधेहि मल्लिआ कहिं चिट्ठइत्ति ।

बर्बरकः । साखु सोमअलं मि । मुल्लिअं लमअन्तिअं आसासन्ती ठाइ ।

नेपथ्य । हद्दी हद्दी । गअमलु गप्पमहणो णाहो ।

उभौ । आकर्णयतः ।

सिंहमुखः । एसे भमलअ दंसिअ ममे आगए एव्व वसन्त वणअमीरिण मअणाहि लामे मालुदे । ता गअन्त आआअवाणीपओअ पण्डिदअणाहि दूले वसाणे क अअकल विज्ञअख णाह पि पसिसस ण एदं वुत्तन्तं अम्म ।       इति निष्क्रान्तौ प्रवेशकः ।

ततः प्रविशति मारुतो भ्रमरकश्च ।

मारुतः। भ्रमरक! क्व नाम गच्छति कुञ्जरकोलाहललोहेजिता मल्लिका?। अपि वसन्तोद्याने पुनर्दृश्यत एव।

भ्रमरकः। मज्झे रमयंतिअं दट्ठुं सोमसरं गएत्ति।

मारुतः। युज्यत एतत्। तदादिशय सोमसरः सरणीम्।

भ्रमरकः। इदो इदो। उभौ परिक्रामतः।

मारुतः। सानुक्रोशम्।

अभिमुखपतयालुक्रूरमातङ्गमल्ल-
प्रतिभयकलहं हाहेपितायाः स्मरामि।
स्थितमतिदयनीयं दृप्तशार्दूलकण्ठ-
स्वनचकितकुरङ्गीकातरप्रेक्षितायाः॥

आश्चर्यम्—

सत्यं सहस्रगुणमुत्तपनात् प्रभूमा
कामानलो दहति गात्रमिदं तथापि।
तस्या घनस्तनभरार्पणलोभनीया-
दद्यापि नो गलति सा पुलकालिरङ्गात्॥

भ्रमरकः। णं णिम्मदीकिओ दूरणिरत्थो क्खु सो णाहिणा पअंडो वे अंडो।

मारुतः। भ्रमरक! अपि सत्यं रमयन्तिकोपकण्ठं उपसर्पन् अपरः करी कलकण्ठेन निवर्त्तित इति।

भ्रमरकः। णाह! णं भणामि। णाहस्स पिट्ठदो अणुधावन्तेण मए दिट्ठो सोमसरकूडादो मणिजडपव्वअमूलकाणणमज्झं पविसन्तो सत्तुरधावन्त सिन्धुरकन्धरारूढो णाहकलअंठोत्ति।

मारुतः । सवितर्कं । भ्रमरक !

छ्यामि निष्ठुरकृतान्तमुखप्रपन्ना-
सा विष्णुराततनया प्रतिपालितेति ।
दूये च दुर्मदमतङ्गजनीयमान-
माकर्ण्य काननगतं कलकण्ठमेकम् ॥

भ्रमरकः । जाणन्तोवि पिअमित्तस्स भुअवीडीर कहं
णाम खिज्जइ णाहो ।

मारुतः । सत्यमात्थ ।

अपि कुञ्जरकोटयःप्रभिन्नाः प्रभवन्ति क्षणमुत्कटं विसोढुं ।
अपि कुण्ठपराक्रमस्य युद्धे कलकण्ठस्य कथं नु चण्डिमानं ॥

तथापि

प्रत्यायते स यावत् तावत् खिन्दान एवास्मि
आशङ्कते ह्यपायानपदेऽपि स्नेहकातरं चेतः ॥

ततः प्रविशति पथिकवेशधारी ससम्भ्रमः शम्बरकशिष्यः कलपिङ्गकः ।

कलपिङ्गकः । (मारुतं विलोक्य) ।

सएष मारुतो गूढं यस्मै हृत्सत्यमेयधीः ।
मल्लिकारक्षकाविद्धहृदयो मद्गुरुः स्वयं ॥ (१)

सत्यमुक्तं सिंहमुखवर्व्वरकाभ्यां वैसन्तोद्यानान्निर्गच्छ-
न्दृष्ट इति ।

मारुतः । दृष्ट्वा ।

इतस्ततः कण्टकविक्षताङ्घ्री रजश्छटाकीर्णकरालजङ्घः ।
परिस्खलन्नद्य परिश्रमेण प्रतिष्ठते कश्चन पान्थ एषः ।

---

(१) रक्षकः शीमन्तः ।

कलपिङ्गकः । सविषादं । हन्त निष्फलोऽस्मद्गुरोः कुञ्जरोन्मादनप्रयासः । भवतु उपायान्तरं प्रयोक्ष्ये (पश्चात् मन्त्रपसर्पति)।

भ्रमरकः । साहु ! अन्नमुत्तलंच्छिअवच्छो दुआदो विअ लक्खिअदु ।

मारुतः । द्विजवन् ! कुतस्त्वमध्वखिन्नः सम्भ्रमापन्न इव च लक्ष्यसे ।

कलपिङ्गकः । आवेगं नाटयन् । क्षणमात्मानमवस्थाप्य सर्वमाख्यास्यामि । अद्यापि वेपते मे हृदयं । गजमयीरिव दिशः पश्यामि ।

मारुतः । स्वगतं । हन्त अयमपि मतङ्गजादुद्वेजितस्तपस्वी । प्रकाशम् । भीरो ! विस्रब्धं ब्रूहि । क्वास्य कुञ्जरः ।

कलपिङ्गकः । निश्वस्य । श्रूयतां ।

आन्ध्रेष्वहं जनपदे हरदत्तनामा
गोदावरी परिसरस्थितिमान् द्विजोऽस्मि ।
संसारपङ्कचकितः शिवमौलिमाल्ये
मन्दाकिनी पयसि गन्तुमनाः प्रयामि ॥

मारुतः । दिष्ट्या तीर्थयात्रापात्रोऽसि ।

कलपिङ्गः ।

तत्कन्धरस्थितिरनङ्कुश एव कश्चि-
दाधोरणः कनकचम्पकगौरगात्रः ।
पादाग्रघट्टनविमोटितकर्णजाहः
कारुण्यवारिधि रचेष्टत तन्निरोद्धुम् ।

मारुतः । जनान्तिकम् । गतः संशयः । ननु निरङ्कुश अपि मतङ्गजमनङ्कुशो नियमयत्येव कलकण्ठः ।

प्रकाशम् । ततस्ततः ।

कलपिङ्गकः । बाष्पं नाटयन् । मम नातः परं प्रसर्पति वाणी ।

मारुतः । साशङ्कं । कथय किं ततो वृत्तं ।

कलपिङ्गः ।

सोऽयं शैलेन्द्रसारोऽप्यहह बलवता क्रोधनिर्धूतमूर्द्धा ।
प्रक्षिप्तोऽवाक् तदुर्व्यां ।

मारुतः । हा सखे कलकण्ठ ! कथं पतितोऽसि ?

प्रशिथिलवसन सम्भ्रमादुत्पतिष्णुः ।

मारुतः । सप्रत्याशं । ततस्ततः ।

कलपिङ्गः ।

आक्रान्तो दुर्म्मदेन द्रुतमिभपतिना हा सखे मारुतेति
क्रन्दन् व्यावेष्टमानो गतघृणममुना दन्तघातैरघानि ॥

मारुतः । सबाष्पाक्रन्दं । हा हा वन्धुजनेन्दो ! हा हा परिपन्थिशैल शतकोटे ! । हा हा मारुत जीवित ! हा हा कलकण्ठ ! किमिदमापतितं । इति मूर्च्छन् पतति ।

भ्रमरकः । सबाष्परुदितं । मारुतं धारयन् । हा णाह कलअण्ठ ! कहं णु तं तारिस परक्कमो पहसिअमहेदस्स तुह करिकीडादो विणिवादो ।

कलपिङ्गः । सहर्षं । स्वगतं । फलितप्रायोऽस्मन्नीतिद्रुमः । हा कष्टमप्रिया वेदकोऽस्मि । भद्र ! कथय कोऽयमीदृशः प्रसनानुचितो महाभागः कश्च पुनरेतत् प्रेमास्पदं ।

मदद्न्तिकरकेलिकरः स महापुरुषः।

भ्रमरकः। एसो महाप्पहाव वसीकिअसअल भूमण्डलस्स अमच्चवह्मदत्तस्स कुमारो मारुओ। सोअ एदस्स पिअ मित्तं कलअंठो णाम।

कलपिङ्गः। मिथ्याविषादं नाटयति।

मारुतः। चक्षुरुन्मील्य। सखे कलकण्ठ! किं एकपदे एव मां परित्यजसि। निश्वस्य।

हा हन्त निर्म्मलसुधाकर बिम्बवक्तं
आजानुलम्बिभुजदण्डमवद्यशून्यं।
गात्रं कथं नु तव वज्रकठोरधारं
वेतण्डदन्तमुसल घतिपात्र मासीत्।

कलपिङ्गः। दुःसहानि खलु सुहृद्विपत्ति व्यसनानि।

मारुतः।

नोल्लिप्ता यशसा दिशो न गुरवः शुश्रूषया तोषिता
न प्राप्तश्च ऋणत्रयापहृतये पुण्यो गृहस्थाश्रमः। (२)
नो वा पूरितमर्थिनामभिमतं न श्लोकथापि श्रुता
हा हा निष्करुणेन दग्धविधिना नीतोऽस्यकाण्डे सखे!॥

भ्रमरकः। हन्त पक्कढ़मत्तो एव्व पारिजादपोदओ खुड़िओ अमुणि अपड़णेण सुक्कणिग्घादेण।

मारुतः। सगद्गदं।

(३) किमालम्बं धैर्य्यं भवतु ननु शून्या सुजनता

---

(२) ऋणत्रयस्य। देवर्षि पितृणाञ्चस्य अपहृतये परिहाराय।

(३) किमालम्बेति। वसति यस्मिन्नाश्रयात् उत्तमाः सर्वेऽपि गुणा-

निराधारा नीतिः प्रियवचनमेकान्तविरतम् ।
विनष्टो विस्रम्भः शमितमखिलं वान्धवतपः
कथामात्रा सत्ता मम हि कलकण्ठ ! त्वयि गते ॥
तदलं निरर्थकैः परिदेवितैः कियद् विलम्ब्यते । य
मणिकूटमुपेत्य भृगुपातेन प्रियसुहृदः पन्थानमनुगच्छा
भ्रमरक ! याहि नीयतामस्मन्नगरमेव स्कन्धावारः ॥ (४)

भ्रमरकः । सविषादं । किं एदं अस्स आरद्धं । च
योर्निपत्य । ण्णाह ! परित्ताअदु२ । सराअ असवन्धु क
सराअ उत्त मण्डलं सगअ तुरअ पदातिकं सअलं
कुन्तललोअं । जस्स तुमं एक्को जोविअंसि ।

मारुतः । शून्यवदन एव विहस्य ।

---

नष्टा इत्याह । किमालम्बमिति । हे कलकण्ठः ! त्वयि गते
सति इत्यर्थः । कथामात्रां सत्तामकह कलकण्ठ इति पाठा
तत्र कथामात्रां वचनमात्रां नतु प्रत्यक्षत्वेन सत्तां सद्भावं मते
इत्यन्वयः । नाम मात्रेण भूवर्त्तिनीति भावः । धैर्य्यं धैर्य्यास्य
इत्यर्थः । किं आलम्बं यस्य तत् किमालम्बं यदवलम्बि इत्यर्थः ।
स्यात् इति प्रश्ने । भूधातोः कर्त्तरि परस्मैपदात् संप्रश्नार्थे लोट
अये सुजनता सज्जनस्य समूहः शून्या नास्ति भूता । नीतिः निरा
प्रियवचनं मनोहरभाषितं किम्वा प्रियः मित्रमिति वचनमित्यर्थः ।
न्तेन नियमेन अपरिहारत्वेनेत्यर्थः विरतं अवसितं विस्रम्भः वि
विनष्टः अखिलं वान्धवतपः शमितं तद्व्यतिरिक्तस्यैव ततपः
स्याऽभावादिति भावः । मम सत्ताहि सद्भावस्तु कथामात्रा तिष्ठ
तद्वचनमात्रका त्वां विना जीवामीत्यपवादमात्रफलकेति भावः ।

(४) स्कन्धावारः सेनेत्यर्थः ।

यो दुःखितेन दुःखी सुखितेन सुखी मयानुपाल्यं
तव यशःशेषतनौ सख्यौ जीवन् न जिह्रेमि।

कलपिङ्गः। सानन्दं स्वगतं। नियतमुपरममेत्येव एषः। अहो मे आकाशवाणी प्रयोगकोविदस्य सर्वंकषो मतिप्रकर्षः। तथाहि।

(५) भ्रूक्षेपविभ्रमनियोजितसैन्यचक्र-
नासीरवीरशकलीकृतशात्रवस्य।
एतस्य विक्रमनिधेर्विनिपातनेऽस्मिन्
सेयं मम प्रभवति स्वयमूर्ज्जिताधीः॥

तदमुना उदन्तेन यावदस्मत् गुरुमानन्दयामि। विमृश्य। अथवा अनेनैव पथिकवेषेण अमुमेव मारुतोपरमं सोमसरस्तीरवासिन्या मल्लिकाया निवेदयामि। येन अस्मान्निवृत्तानुरागा स्वयमेव मद्गुरूद्वाहमनुमंस्यते। विश्वावसुना तु कात्यायनी वचनैक प्रमाणेन प्रतिपन्नमेवैतत्।

भ्रमरकः। कलपिङ्गकं प्रति। तुह्मे निवारेह। अह्माणं साहसस्स अदिदारुणं आरम्भं।

कलपिङ्गः। भद्र! एवमनुरक्तस्यास्य महापुरुषस्य दुर्निवारोऽयमध्यवसायः। न क्षमे चैतादृशानि द्रष्टुं। तदहं मार्गादनशनो ह्यसोढ़ः क्षणविलम्बमपि यास्यामि। इति निष्क्रान्तः।

---

(५) भ्रूक्षेपेत्यादौ। भ्रूक्षेपविभ्रमेण नियोजितं यत् सैन्यचक्रं सेनासमूहः तस्य नासीरे पुरोभागे विद्यमानाः ये वीराः तैः शकलीकृतशात्रवस्य ध्वस्तपरिपन्थिन इत्यर्थः। सैन्याग्रभागे नासीर इत्यभिधानम् अत्र नासीरपदस्य वशंकरीरादिवद्विशेष्यमात्रपरत्वम्।

भ्रमरकः। स्वगतं। अदि णिसंसो विश्र ऐसो पडिभाइ। प्रकाशं। णाह! तह णाम अणुरत्तहिअआ वि कहं उवेक्खिज्जइ।

मारुतः। मुग्ध!

त्यजतासूनपि येन स्नेहार्द्रो णाहमाहृतः।
तेन वियुक्तस्याद्य मल्लिकया जीवितेन वा किं मे।

ततः प्रविशति कलकण्ठः।

कलकण्ठः। सानुरागं।

आन्त्याश्रुप्रताननविलोलविलोचनश्री-
विष्वग्विकीर्णकमलोत्पलमम्बुमध्ये।
तस्याः पयः कणकरम्बितमुग्धगण्ड-
मद्यापि मुञ्चति न मानसमाननं तत्॥

यावदहं दूरनिरस्तहस्तिनं प्रियसुहृदं वसन्तवनसविधेऽन्विष्यामि। परिक्रामन् विलोक्य। सविषादाशङ्कं। एषः।

वाष्पायमाणनयनविनिवेदितशोकभारः
चरणनिपतितेन भ्रमरकेण सप्रार्थनं किमपि निवार्य्यते।

उपसर्पति।

भ्रमरकः। णाह! जइ एव्वं पुढमं एव्व भिउम्मि पडिस्सदि सअलो वि खन्दावारो।

कलकण्ठः। सभयविषादं। किं प्रथममेव भृगौ पतिष्यति स्कन्धावार इति।

मारुतः। अश्रुण्वन्नेव। ऊर्द्ध्वमवलोक्य। सखे! कथं मामनमत्य गच्छन् स्वच्छन्दमोघमान् न विलज्जितोऽसि।

कलकण्ठः। हन्त! जीवन्तमेव मामन्यथा सम्भावयति प्रियवयस्यः।

मारुतः।

त्वरां विलम्बस्व गजेन्द्रगामिन्!
जवादहं यावदनुव्रजामि।

कलकण्ठः। शान्तं पापं शान्तं पापं प्रतिहतममङ्गलं। त्वरितमुपसृत्य। वयस्य! किमिदमस्थान एव सकलमहीमण्डलमण्डनमात्मानममङ्गलेन ननु वचसा योजयसि।

मारुतः। हन्त! कलकण्ठस्य स्वरोऽयं।

भ्रमरकः। विलोक्य। णाह! दिट्ठिआ वड्ढामो पच्चाअदो एसो णाह कलकण्ठो।

मारुतः। सहर्षगद्गदं। एह्येहि सखे कलकण्ठ! देहि कण्ठग्रहं मम पुनर्न प्रभवतो बाष्पायमाणे द्रष्टुं विलोचने।

कलकण्ठः। सस्नेहमालिङ्ग्य। वयस्य! किमेतद् वर्त्तते।

भ्रमरकः। णाह! गोदावरीतीरवासी त्ति कोवि पहिओ आगदुअ तह कहिदवन्तो कुञ्जर उत्तंतं। जेण णाहो वि भिउपडणंमि सज्जिओ।

कलकण्ठः। विमृश्य। मन्ये कुह न निद्रा शम्बरकान्ते वासिना कलपिङ्गकेन विप्रलब्धः प्रियवयस्यः। द्रुह्यति चास्मभ्यं मल्लिकार्थी शम्बरकपशुः।

नेपथ्ये। हा सअललोअलोअणाणन्दण फलमहाभाअ कहं तुइ अणुरत्तं मं परिच्चइ असग्गविलासिणी लोलुवो सि ता जाव ओहसिअ कुसुमाउहगव्वं तुमं अच्छारओ अप्पवसंणअंति दाव झत्ति आगदुअ अहं णिवारेमि।

सर्वे आकर्णयन्ति ।

मारुतः । साकूतं ।

नादः स एष मृगशावविलोचनायाः
चेतो विकर्षति विलोलयते धृतिं मे ।
व्याधेषु विद्दनिजवत्सभतीव्रशोक-
विप्लुष्टवालकुररीरवमुग्धतारः ॥

कलकण्ठः । मन्ये मल्लिकामप्यमूमुहत् मुसलयः कलं-
पिङ्गकः यावदेनां चरितमभ्यवपद्यामहे । सत्वरमुपसर्पति ।

भ्रमरकः । णाहं ! एसो तत्तहोदीए सीमन्त परि-
च्चुदो दिप्पइ सिहामणि ।

मारुतः । मन्ये मतङ्गजभयव्याकुलाया गमनसम्भ्रम-
च्युतेनानेन भवितव्यं ।

उद्धृत्य सस्नेहं ।

मन्वद्भुतो मताङ्ग्या चिकुरे जलदे यथा तडित्पुञ्जः ।
स्फुरति शोच्योऽपि मणे ! तस्याश्चूडापदात्परिभ्रष्टः ॥

पुनर्नेपथ्ये । कालिन्दि ! धारेहि धारेहि मुज्झन्ति-
णिपडइ पिअसही मल्लिआ ।

सर्वे आकर्ण्य त्वरितमुपसर्पन्ति ।

ततः प्रविशति नवमालिका कालिन्दीभ्यां धार्यमाणा मूर्च्छा-
निमीलिताक्षी मल्लिका सम्भ्रान्ताश्च रमयन्तिका मधुकरिका सारसिकाः।

रम । सविषादं । हद्धि ! णिप्फन्दा अज्जवि पिअसही
मल्लिआ ।

नावमलिका । सबाष्पं । कथ्य किदे रुदिस्सामो किं
महाभाअस्स उद मल्लिआए ।

र्गाः । हा मल्लिए ! तुमं वि किं महाभाअं अणुगच्छसि ।
र । कालिन्दि ! कहिं णु पब्भट्टो मुच्छाहरो सोमन्तमणी ॥

नवमालिका । हा मल्लिआ हिअअ वल्लह ! महाभाअ
ान्ध ! धारेहि । तुह किदे मुच्छागअं णं ।

मारुतः । सवल्प्रमुपसृत्य । नवमालिके ! अयमहं धार-
मि ।

सखौ । विलोक्य । सानन्दं । पिअं णो पिअं णो अकरु-
णरीरो पच्चागदो महाभाओ ।

नवमालिका । सहर्षगद्गदं । महाभाअ ! हरिसपारवस्सेण
आउला ण किंवि सक्कुणोमि भणिदुं । धारेहि । जीविद-
सस्सं पत्तं पिअसहीं मल्लिअं ।

मारुतः । सविषादानुरागं धारयति ।

रम । अपवार्य्य । महुअरिए ! सो एसो पच्चक्खविम्महो
हाभाओ मारुदो । जो महजीविदप्पदाणमहोवआरोणं
व पिअसहो । सरिसो क्खु मल्लिआए एदस्सिं पणअबन्धो ।
ट्ठिआ असच्चाणि तस्स पहिअहरअस्स वअणाणि ।

मधुकरिका । सहि रमअन्तिए ! सो किल दुट्ठहि-
ओ सविआरिदं पुणो पुणो पेक्खिदवन्तो ।

रमयन्तिका । चिट्ठदु तस्स हदासस्स पसङ्गो ।

कालिन्दी । सहि पवुज्झस्स पवुज्झस्स ।

कप्पन्ददीहाउ संपेच्छ महाभाअं ।

मल्लिका । प्रत्यागच्छति ।

मारुतः । सानन्दं । नवमालिके मा मा रुदिहि ।
ुध्यते तव प्रियसखी ।

कृष्णस्निग्धकनीनिके विकसत: कर्णान्तदीर्घे दृशा-
वुत्कम्पो हृदयस्य वेपितकुचा भोग: शनै: शाम्यति ।
धत्ते शीतरुचोविधुन्तुदमुखान्मुक्तस्य लक्ष्मीमिदं
मुग्धाङ्ग्या विगलद्विमोहतिमिरं वक्त्रं प्रसीदत्क्रमात् ।

मल्लिका । सर्वतुखमभिनीय । सहिओ कीं अस्सु अप्पवाहे
पडिअह्मि । अहवा मुआ गदुअ तेण महाभाएण सङ्गे
सङ्गअह्मि ।

नवमालिका । सहि मल्लिए ! णहि णहि सग्गम्मि एत्थ
सोमसरत्थलं च्छिअलच्छीविलासप्पासादे महाभाअस्स
वच्छत्थले पाडिआसि ।

मल्लिका । सहर्षं विलोक्य । महाभाअ ! दिट्ठिआ
तुमं पुणोवि पेच्छामि । अवि सच्चं जीवसि ।

मारुत: । अपवार्य्य । सम्प्रति जीवाम्येव त्वयि नामैवं
प्रसन्नायां । नोचेदनङ्ग वह्निज्वालादग्धस्य कात जीवकथा।

कलकण्ठ: । उपसर्पति ।

रमयन्तिका । सहर्षं । मडुअरिए ! दिट्ठिआ पत्तो
कलअण्ठोवि ।

मधुकरिका । दिट्ठिआ एदस्य अमङ्गलाइ ण कहि-
आइ तेण णिसंसेण असहा अणहविज्जं । तुएवि मल्लिआए
विअ एदं मुच्छा वसणं होज्ज ।

कलकण्ठ: । अपि भवत्योऽपि तेन पथिकवेषधारिणा
शम्बरकान्तेवासिना वञ्चिता: स्थ ।

सर्व्वा: । किमहो ! किं सम्बरअसिस्सो हदासो कहिम्म
तेण मोदाणई तीरवञ्जणो वाराणसी पहिओ अहन्ति ।

सारसि। जनान्तिकम्। कालिन्दि! यं भणिदं मए
ट्टस्स वि करभवगुवरो सरो मामासवाणिं अणुहरदि।
मारुतः। जगतं। उपक्रान्तमपकर्त्तापि तेन कलपिङ्गकेन।

श्रुत्वा मिथ्यामद्विपत्तिच्छिद्रहासो
त्यक्ता शङ्क जीवितं कातराक्ष्याः।
मृत्युव्याजं प्रेमसर्वस्वमस्या
विस्रम्भाणां स्थानमभ्यर्चितं यत्।

पथ्ये। भो भो भुजस्तम्भसंस्तम्भितप्रतिभटकुम्भीघटाः सेना-
भटाः! अन्वेषयन्तु मणिकूटकटकेषु वसन्तवनोपकण्ठेषु
सोमसरः कूलोपशल्येषु स्वामिनं परिपन्थि गजकेशरिणं
कुमारमारुतं समराणेव मन्दरचण्डदोर्दण्डमलकण्ठं च।
अजानन्तावेव सोमसरसीतीरे भ्रमरकमात्रपरिजनौ सञ्चरन्तौ
किल तत्कालप्रभिन्नमदरोषामर्षदुरुपसर्पाभ्यां कुञ्जराभ्यां।
त्तें आकर्णयन्ति।

कालिन्दी। विलोक्य। अम्महे एसो पअलंतकुलाअल
सहस्स सारिच्छभीसणगअ घडाणि वइ पुरोभाओवमाणतुरअ
खुरपुटतालुद्दलिअ धरित्तितलचलिअ धूलीधूसरिअ दिसा-
मुहो एत्तो मुहो आगदो एव्व महत्तो सकलणिवहो।

मारुतः। भ्रमरक! गच्छ निवार्य्यतां मा मा सम्भ्रमः
कार्य्य इति।

भ्रमरकः। जं णाहो आणवेदित्ति निष्क्रान्तः।

मउमालिआ। अह सो भमरओ वअणादिअ णाहवअण
वेलाए कन्धप्पसरो तहीं चिट्ठिओ सेणासाअरो।

मल्लिका। जनान्तिकम्। अम्महे हत्थिअव सेणाचक्कव

णाहो वि महकिदे एक्को एव्व ठिओ महाभाओ समस्तलो-
अमण्डणो भूदोभयं अरण्ण कुञ्जरस्स अभिमुहं धाविओ ।

नवमालिका । सहि ! एव्वं ठिए वि तुए णं सुट्ठु
अनुट्ठिज्जइ । जं अप्पणोव्व अप्पाणं । णास अप्पेइ ।

मल्लिका । निःश्वस्य । सहि किं करोमि । तादे वस-
वट्टिणि । तादेण पडिस्सादं किल रात्रस्स विहड्ढि । मल्लि-
आए वरणिसए णाहं पमाणं । अपितु भअवदी कञ्चाइ-
णीएव्वेत्ति ।

नेपथ्ये प्रतिहारी कलकलता ।

णोमालिए दुक्खसोअदुम्मिअ हिअआ भट्टिणि-
णा णावेदि भट्टिदारिआमत्ति घरं आणेदव्वेत्ति पडिपालइ
वसन्तवण्विरन्ते सअल परि अण परि उदो कण्णेरहो ।

नवमालिका । सायङ्कं । कण्णअलए । कोस दुस्सहसोअ-
दुम्मिआ भट्टिणी ।

कामकलंतता । सविषादं । णं भअवदीए गोरोए भद्द-
ट्ठो अमच्चो भट्टिदारिआए सम्बरओ करोत्ति ।

मल्लिकामारुतौ विषादं नाटयतः ।

सार । जनान्तिकम् । मह अरिए ! अमणोरमं आरद्ध
वम्महेण जो पड्डोफ्फर सरिसाणुरामाइमे अड्ढे विहड्डइ ।

मारुतः । सनिर्वेदं । स्वगतं ।

एतस्याः प्रथमावलोक समये गाढं प्ररूढः क्रमात्
संसद्धोद्भत पल्लवः कुसुमितोमन्ये फलिष्यन्नपि ।
सोऽयं हन्त मनोरथ द्रुरधुना शाखोपशाखान्वितः
काष्ठं हन्त कृतान्त वेगसमयादम्भोलिना भज्यते ॥

मल्लिका । स्वगतं । हा मल्लिए ! एत्तिअ मेत्तजीविअ
फलासि । अह अम्ब गोरि ! कहं रक्खसहत्थे दिस्सं ह्मि ।

मारुतः । मल्लिकामवेक्ष्य विलोक्य । स्वगतं ।

अतर्भवानि ! मयि दारुण दुःखदूने
मा नाम चित्तमनुताप परिप्लुतं भूत् ।
एतां विषण्णवदनामवलोकयन्त्याः
किं ते कृपाश्रुलुलितेन विलोचनेस्तः ॥

कनकलता । णोमालिए ! मदयणेण अहिअं किलम्मइ
भट्टिणि । ताअत्ति भट्टिदारिअं सक्कुण गच्छह्म ।

नवमल्लिका । सविषादं । हद्धी हद्धी भट्टिदारिआ ।

मल्लिका । सबाष्पगद्गदं । अप्पणअणाभिराम महाभाअ
आपुच्छदि सरणकसरणा मन्दभाइणी मल्लिआ ।

नवमालिका । भअवदि ! अम्बिए णादि जलहिअ-
आसि । कहं तुह चरणकालम्बणा मल्लिआ जीविद संसअं
आरो विज्जइ । अहवा ण एव्वं विहो तुह आदेसो एदं
वि तमस सम्वरंसिसम्समखवणं तक्केमि ।

सार । जनान्तिकं । कालिन्दि ! सच्चं अहिहिदं
णोमालिआए ।

कनकलता । हद्धी हद्धी ।

मल्लिका । स्वगतं । हा मल्लिए ! एत्तिअमेत्त जीविद-
फलासि । भअवदि गोरि कहीं रक्खसहत्थे दिस्सह्मि ।
नवमालिकया सह निष्क्रामति ।

रम । सारसिए ! कहंवि मल्लिअं अणुगच्छामि । ण सक्कु-
णोमि आपुच्छिदुं जीविददाणमहोवआरिणं महाभाअं ।

सार। महाभाअ! एसा तुए दिश्चं सरीरं धारअन्ती घरं गच्छदु रमअन्तिआ।

कलकण्ठः। सन्तु गृहाः परिष्कृताः।

कालिन्दी। सारसिए! पेक्ख पेक्ख हिअअउब्भरंत अह भाविविरहवेअणाणुसन्धाण उविसेसवड्ढान्त म अणा-णलवम्भमंणविसेसदीहर णीसासं उद्दामविब्भमोल्लुसिअ-मालिआ कलिअ कडक्ख पेक्खिदगाअणाराअ सव्वसं-सम्वग्गिअ सोअ सलिलपत्त परोप्परप्पोडिअ णिवलंग घ-गाढ़परिरम्भ सहुव्भिण्ण पुलअजालरमणिज्जं रमअन्तिआ कलअण्ठ.णां अवठठाणं।

कलकण्ठः। सानुरागं। स्वगतं।

प्रणय चपलाः प्रेमस्फाराः प्रसूतमनोभुवः
स्वपितधृतयश्चेतश्चोराश्चलाचलतारकाः।
शिव शिव मयि प्रेङ्खन्त्यस्यास्तरङ्गित घूर्णित-
स्तिमितमधुरस्निग्धा मुग्धा विलोचनविभ्रमाः॥(६)

मधुकरिका। इदो इदो।

---

(६) प्रणयचपला इति तरङ्गिताश्च घूर्णिताश्च स्तिमिताश्च मधुराश्च स्निग्धाश्च इति द्वन्द्वः तथा मुग्धाः अतएव प्रणय चपलाः प्रेमस्फाराः प्रसूत मनोभवः, स्वपितधृतयः चेतश्चोराः चलाचल तारकाः अस्या विलोचन विभ्रमाः मयि प्रेङ्खन्ति शिवशिव इति हर्षे। अत्र तर-ङ्गितत्वादि,मुग्धत्वान्तानां षण्णां विशेषणानां प्रणयचपलत्वादि चलाचल तारकत्वान्तेषु षट्सु विशेषणेषु क्रमेण हेतुत्वं बोध्यं तरङ्गितादि लक्षणं तु प्रथमाङ्के निरूपितमस्माभिः।

रमयन्तिका। अपवार्य। मड्डुअरिए! कदा पुणोवि क्खिस्सं पुण्णचन्दसुन्दरं महाभाअं।

मधुकरिका। सहि अग्गओ। कहराओ सम्भरअ क्ख वदिसि संकीअदि। अवि अस्सहा सुलहं क्खु दंसणं णं वि।

रमयन्तिका। निःश्वस्य। कथं कथमपि निष्क्रामति।

मल्लिका। णोमालिए! इन्दीवर दुल्लह दंसणं कण्णंत-ोहर विसाल लोअणपुण्डरीअं पुणोपेक्खिस्सं महा-ाअस्स मुहचन्द मण्डलं। इति विवलित मुखी सवष्पं पश्यति।

सारसिका। कालिन्दि! पेच्छ सकरुणाणुराअ णवट्टिअ मुहचन्दाए मल्लिआए वाहहर पूर पूरि आइ सारकरकं विअ कमलकलिआ मित्ताइ णेत्ताइ। ता ामहे गदुअ आसासणिज्जा।

कालिन्दी। महाभाअ! एव्वं ट्ठिएण पहवन्ति लण। फत्तदुं वि।

मारुतः। अनुसत्तव्या भवतीभ्यां मल्लिका।

कालिन्दी। महाभाअ! एदं वि वाराणसी पहिअ अणादो अदिरित्तं मणेहि।

ारसिआ वि भणइ अस्सवि आआसवाणीए विअसरोत्ति।

कालिन्दी। सारसिके! अपि श्रुतं त्वया आकाशभाषितं।

सारसिका। अहइ।

कालिन्दी। स्वगतं। युज्यत एतत्। एतादृशानि तत्रास्य ेनयविलसितानि।

मारुतः। स्वगतं। आश्वासनानि खलु एतानि। प्रकाशं।

कालिन्दि! स एष मल्लिकायाः सीमन्तलालितो मणिः इत्यर्पयति ।

कालिन्दी । आदाय । हन्त असोसिदोवि एसोण दिट्ठ अम्हेहिं । निष्क्रान्तः ।

मारुतः । निःश्वस्य । हन्त अदृष्टपारे व्यसनसागरे पतितोऽस्मि ।

(७)मूर्च्छा स्वेच्छं स्फुरन्तु यातु वपुरिषुभिः पूर्णकामः स कामो भूयादाधिः समिद्धोरणरणिकपरिस्फूर्त्तिरूर्जस्वलास्तु ।
वैधुर्य्यं वर्द्धतां द्राक् द्रवतु धृतिरपध्वंसतां सौख्यचिन्ता हन्तासौ तुल्यरागं जनमसुलभयन्नस्तु धाता कृतार्थः ॥

कलकण्ठः । सखे ! युवयोर्मल्लिका मारुतयोरनुरूपं पाणिग्रहणं मङ्गलं सर्वमङ्गलानसं मन्यत इति कथमेतत् सङ्गच्छेत । पश्य

मूर्त्तौ युवां प्रसादीयस्याःपरिवस्यया प्रसन्नायाः । (८)
तद्वचनोपघ्नमिमं प्रत्यूहन्नेव विश्वसिमः ॥

मारुतः । कलकण्ठ ! विचित्रेषु कर्म्मणां विपाकेषु कथं नाम विश्वसनीयमेतत् । पश्य

शुभमितरद्वा प्राचरं कर्म्मसुखं दोग्धिदुःखं वा ।
दैवं पुनस्तटस्थं तदुभयमनुभाव यदुदास्ते ॥

---

(७) मूर्च्छेति । रणरणिकपरिस्फूर्त्तिः उत्कण्ठापरिस्फुरणम् इत्यर्थः । ऊर्जस्वला स्थिरतरेत्यर्थः यातु खण्डयतु इत्यर्थः ।

(८) परिवस्यया पूजया तद्वचनं सर्वमङ्गला वाक्यं उपघ्ना आश्रयस्थानं प्रमाणमिति यावत् । यस्य तं प्रत्यूहं विघ्नं इत्यर्थः । प्रत्यक्षतः मल्लिका अपि रविश्वसनीयेति भावः ।

कलकण्ठः । कथमेवं भाषसे प्रत्यक्ष एव कलपिङ्गक वृत्तान्तो वयस्यस्य ।

मारुतः । विचिन्त्य । हन्त संशये स्थापितोऽस्मि । स्वगतं किमत्र कर्त्तव्यं । सावष्टम्भम् ।

प्रणतजन पारिजातवल्लीं भवानीं प्रसादयिष्यामि ।
गत्वा गौरिगृहानेको मोक्ष्ये वा निष्फला नसून् ।
आराध्य देवीं शर्व्वाणीं लप्स्ये वा मल्लिकां प्रियाम् ॥

प्रकाशं । सखे कलकण्ठ ! तवापि हृदयमनुप्रविष्टेव रम यन्तिका ।

कलकण्ठः । सलज्जस्मितं । सत्यमुपलक्षितं वयस्येन ।

उद्भिन्नबाष्पकणिकानुपगूढभावान्
उत्कण्ठितान् मयि मुहुः क्षिपती कटाक्षान् ।
सेयं नितम्बभरमन्थरमन्दयाना
यान्ती गृहानपि सखे ! हृदयं गता मे ॥

मारुतः । कलकण्ठ कथमेनां जिघृक्ष माणएव मदकरि णिखादवप्लुतोऽसि ।

कलकण्ठः । अहं खलु भ्रमरकमात्र परिजनं वसन्त वनगतं वयस्यमुपश्रुत्य त्वरितमुपगच्छन्नध्ये सरणि सन्नि हितया सारसिकया सोमसरः कूलं नीतोऽस्मि ।

मारुतः । ततस्ततः ।

कलकण्ठः । ततश्च

स्नातोत्थिता सलिलबिन्दुतरङ्गिताङ्गी
सा सुन्दरी तटगते मयि दत्तदृष्टिः ।

संसक्तसूक्ष्मविमलाम्बरलोभनीय
श्रोणीभरा मनसि मे लिखिता स्मरेण ॥

मारुतः । सखे ! हृदयङ्गमानि खलु तरुणि मश्लिष्ट
समुल्लिखितानि नितम्बिनीनामङ्गकानि विशेषतः स्नातोत्थि-
तानाम् ।

कलकण्ठः । ततश्च तत्कालाढौकितस्य मदेभस्य झटि-
त्यारूढपादपः स्कन्धदेश मास्कन्दितवानस्मि ।

मारुतः । सहर्षं । सखे ! सिद्धमेवाभिलषितं मन्यस्व । पश्य

तद्रूपविभ्रमविवर्त्तितरागवृत्तिः
प्रागप्यसौ तव वयस्यकरं गतैव ।
अद्य प्रसह्य चिकुराग्रविसारिहस्ता-
दुन्मोचिता किमुत दुष्टमतङ्गजेन्द्रात् ॥

कलकण्ठः । वयस्य ! अस्याः पुनरग्रतो रुद्रातनामा
शम्बरकपक्षपातीति सन्दिह्यते ।

मारुतः । किमेतावता ।

समहृदयौ चेत्तरुणौ किं प्रतिकूलेन बन्धुवर्गेण ।
अनुकूलेनापि पुनर्नार्थस्तौ चेद्विरागौस्तः ॥

तद्यामः शिबिरं । इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

पञ्चमोऽङ्कः ।

ततः प्रविशति विप्रवेषधारी राक्षसः ।

अहो अतिमनोहरं अकुतोभयं अस्मत्कुलचरितं ।
निर्वर्त्यन्ते नृमांसैर्निरवरणविधयः पीयते रक्तसीधुः
स्वेच्छासम्भोगसौख्यं भवति हठहृतैरन्यदारैरुदारैः ।
वैतानीनां क्रियाणां विमथनमधिकं जायते दृष्टहृष्टैर्
केन स्वच्छन्दहृद्यं न भवति तदिदं राक्षसं जन्म तुष्ट्यै ॥

मया पुनरति नीचयोऽस्मज्जाति विरुद्धोऽप्ययं वेषः
संहलद्वीपवासिनः सख्युर्विकटग्रीवस्य कृते समभ्युप-
तः । आदिष्टोऽस्मि हि प्रियसखेन । सखे खङ्गजिह्व !
न्ति मे तत्रापि दृष्टानि त्रीणि विशिष्टानि वस्तूनि ।
कं सकलमूर्च्छाहरं रत्नं अपरं चित्रमयं कन्यारत्नं ।
न्यद्विमलं दिव्याम्बरञ्चेति । पतितानि च तानि प्रमा-
न लङ्कापुरगमनसम्भ्रमाकुलेन मया मन्निवास एव वट-
ी कथितञ्च लङ्कापुरवास्तव्यैः दैवज्ञैरेतद्वस्तुत्रयनाशाद्वर्षा
मीय एव ममायुरिति । अतस्तदन्वेषणाय त्वया प्रयत-
यमिति । सहर्षं । दृष्टञ्च विप्रवेषधरेणान्विष्यता मया
स्मिन्नेव कुसुमपुरे । सविस्मयं । अहो या सा तादृश सौन्द-
नियन्त्रित सकललोकलोचना चित्रकन्या । यत्र दुकूला-
लिखितौ मरकतभङ्गुरविस्तरणः । ताविह स्थावेव स्तः ।
स्य । मोष्टागावपि तावेव । निष्कटं परिक्रामति । पुरतो
लोक्य । कोऽयं सायं सन्ध्यावतारविरलसञ्चारमप्यन्धकारं
रयगम्भं कपकतमालप्रायो महानारामः । निर्वर्ण्य । मन्ये

कुसुमपुरोपकण्ठवासिन्याः कात्यायन्या विहाराक्रीडोऽय[म्]
यः शर्वरीषु तत्कालसन्निधानसंकलपरिवारमण्डलो मनुज[ै]
दुष्प्रवेश इति श्रूयते । तथाहि

क्रीडन्ति प्रमथार्भकास्तत इतो मूलेषु पृथ्वीरुहां
श्रूयन्ते घनगर्जितप्रतिभटा हेरम्बकण्ठारवाः ।
दूरादेव पुरद्विपैः परिहृताः सन्त्रासफीत्कारिभिः
वान्त्येतेऽपि च गौरिकेसरिसटासंघट्टिनो मारुताः ॥

साशङ्कं । तदस्माकं दुरुपसर्पोऽयं देशः । [illegible]
षणो खल्वसुरराक्षसेषु मायाविनो वसुदेवनन्दनस्य सोदर[्य]
अस्तोकसामान्यप्रभावा दुर्गाः । तथाहि—

एषा विषाणकोटिव्यस्तमहेन्द्रोपवाह्यस्य ।
अविषह्यमहिषस्य शिरः किसलयमुग्धेन चरणेन

अथवा । कातरजनप्रशंसागोचरोऽस्या विक्रमः ।

प्रागस्मद्वंशजातः स किल दशमुखो द्रागुदानेष्टदोष्णां
स्थेमानं सन्दिदृक्षुः चटचटिति समुत्पाट्य कैलासमद्रिम्
किं ब्रूमस्तामवस्थां प्रपन्नति शिखरे भीतवल्लहंसल्ल
नत्वा स्लिष्यत् स्वदोर्भ्यां पुरमथनमियं चाटुवादानपेक्षम् ॥

मार्गान्तरेण परिक्रामति । सकौतुकं कोऽयमभिनवारू[ढ]
यौवनारम्भो मजकुमारमन्मथरसञ्चारः प्रविविच्यत्यविशङ्कमे[व]
दुर्गायतनारामं । यएषः ।

गण्डस्थलीरुचिः शरविपाण्डुरगण्डतलः
मृदुभुजदण्डमण्डलकरालकृपाणलतः ।
नयनविलोभनोऽपि च विभर्त्ति भयङ्करतां
विटपमिषस्मिचकफणीव पटीरतरुः ॥

निवर्ण्य । अये ! सोऽयमस्मद्दुकूलाञ्चललिखितलक्षणः । यस्याम्बरे सा चित्रकन्या । वाचयति ।

दूरादेव तमस्यपि धाम्ना स्वेनैव लक्ष्यमाण वपुः ।
मन्ये दुरासदोऽयं मृगपतिरिव यौवनोद्रिक्तः ।

तन्मन्ये दुर्यैव एतत्करवर्त्तिनी चित्रकन्या । अथवा । सत्यां सत्यकन्यायां किं चित्रकन्यया । तद्यावन्मणिकूटशिखरागतस्य सख्युर्विकटग्रीवस्य सर्वमिमं वृत्तान्तमावेद्य स्वेच्छं गच्छामि । नभो विलोक्य । अस्तमत् सञ्चरणोचितश्चायं समयः ।

(९) यदिह नवनवाहृग्धोरणीदिग्धमांस-
प्रचयमिव नभोऽन्ते साध्यमैधिष्ट तेजः ।
तदखिलमति दृप्तैर्यातुधानैरिवैतैः
समसमयमघासि ध्वाङ्क्षहृतया तमोभिः ।

इति निष्क्रान्तः । शुद्धविष्कम्भः ।

---

(९) यदिहेति । इह पूर्वोक्तसमये नभोऽन्ते गगनान्तराले नवनवाहृग्धोरणी दिग्धमांसप्रचयमिव स्थितमित्युत्प्रेक्षा । अत्र नो द्वितीयसन्धिकालनिरासगर्भं नवनवेति पदम् ।

द्वितीय सन्धिकाले हि आरुण्यभङ्ग इति भावः । असाध्यम् अपरिमितं यत् तेज ऐधिष्ट वव्धे । अखिलं समस्तं तत् पूर्वोक्तविशेषणविशिष्टं तेजः कर्म अतिदृप्तैः यातुधानैरिव अतिदुर्मदराक्षसैरिव स्थितैः इत्युत्प्रेक्षा ।

एतैः पुरोदृश्यमानैः तमोभिः कर्तृभिः समः समयः यस्मिन् कर्मणि तद्यथा भवति तथा समसमयम् एककाले इत्यर्थः ध्वाङ्क्षहृतया वायसहृत्या काकभोजनप्रकारेणेति भावः अघासि कवलितमित्यर्थः ।

ततः प्रविश्य यथानिर्दिष्टो मारुतः ।

मारुतः । साश्चर्य्यं ।

याः पार्श्वोत्थामकृतकघनप्रेमविस्फारितानां
मव्रीडानां सकलकथयानन्दनाडिन्धमानां ।
तेषां तेषां हृदयनिहिताकूतनिष्पन्दिनेत्र-
व्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणां ॥

हन्त पुनरिदमेव स्मारं स्मारं प्रतिवारं हृदयं ।

अन्येन पाणिमवलम्ब्य जिहासमाना-
मन्तर्विभिन्नहृदया सदयं प्रयान्ती ।
वक्त्रं तदिन्दुमधुरं परिवृत्य भूयो
बाष्पाकुलेक्षणमवैक्षत यन्मृगाक्षी ॥

पुनः साश्रस्रं ।

तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं
सुवर्णकदलीदलोद्दलितगर्भगौरवं पुनः ।
कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठित
प्रथिमकुचमण्डलं परिरभेय वीक्षेयवा ॥ (१०)

---

यद्वा यत् असाध्यं तेजः तेजोरूपं मननवाक्यघोरणी छिन्नमांस-प्रचयं कर्त्तुं इह तेजो निष्ठाऽभेदप्रतियोगित्वं विशेषणविशिष्टमांस-प्रचयस्येति रूपकम् । नभोऽन्ते ऐधिष्टेव अवर्द्धतेवेत्युत्प्रेक्षा । अखिलं तत् कर्म्म पूर्वोक्तमांसप्रचयमित्यर्थः अतिदृप्तैः एतैः तमोभिः तमोरूपैः यातुधानैः अत्रापि तमोनिष्ठाभेदप्रतियोगित्वं यातुधाना-नामिति रूपकम् । समग्रमयं धाङ्क्षत्या अभावि इवेत्युत्प्रेक्षा इति योजना ।

(१०) परिरभेय आलिङ्गेय वा अथवा परिरम्भाभावे दृष्टव्यः

अपि भूय एवैतत् ।

आसीनः स इत स्थितः प्रचलितः स्वप्नायितो जाग्रविः
पश्यन्मीलितलोचनोऽव्यवहरन्मौनं प्रपन्नोऽथवा ।
तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां
स्निह्यन्तीं प्रणयाद्रं मुग्धलपितां पश्यामि नक्तंदिवम् ॥

अन्यतो विलोक्य । सहर्षं ।

कुरवकचम्पककेसरतमालबिल्वतालसमाकीर्णं ।
अपहसितनन्दनवनन्तदिदं कात्यायनी गृहोपवनम् ॥

सानुशयं । एतत् खलु निशि निशि साचाद्भवत् सर्वं
स्वप्नन्तया मनुजैः दिवसैकगम्यमिति श्रूयते ।

नेपथ्ये । कलकलः ।

मारुतः । विलोक्य सविस्मयानन्दं । अहो ! अहं पूर्विकाप्रण-
नात्रञ्जितमणिकिरीटपरस्परसंघट्टस्रस्तस्तवककुसुमापीडै
विडितं मृडानी भवनमुपर्युपर्यम्बरमापतद्भिरमृता-
भिः । निर्वर्ण्य सकौतुकं ।

अवतरति विचित्रदर्शनोऽयं
विकसितनेत्रपरम्परो विडौजाः ।
कमलवनवृतो मरुद्भिर्मोर्णा
नभस इवामरसैन्धवः प्रवाहः ॥

सबहुमानं ।

त्रैलोक्यं भ्रूविधेयं वलिजिदवरजः सेवितारो निलिम्पाः

---

वीक्षेय इत्युभयत्र संप्रश्ने लिङ् प्रार्थनायां वा वीक्षमाणो-
ऽहमिति भावः । अभिलाषविप्रलम्भः शृङ्गारः ।

सम्पूर्णे च सप्ततन्तु सुतिरकृतकवाम्मोष्यति: स्वस्तिवाहः ।
स्वर्गाद्रिः स्वर्णवापीगगनसरिदृतो निष्कुटः कल्पवाटः
पौलोमी नेत्रपेयं वपुरिह किमिति श्लाघ्यता नो मघोन: ॥

अन्यतो विलोक्य । कोऽयं तडिदालोक इव प्रतिहन्ति
नयनरश्मीनविच्छिन्नप्रकाशः ।

विभाव्य । साधारणं क्रतुभुजां वदनं पुरस्त्री
सौभाग्यलोपि गिरिशस्य तृतीयमक्षि ।
तेजस्तिरस्कृततमश्चयमाविरस्ति
स्वाहातपः फलमुषर्बुध एव साक्षात् ॥ (११)

मल्लिका । मन्ये एतद्दर्शनाद्दोषदुर्मोषितमन्दाग्नं स्मरि-
ष्यति सारदासस्य हरमहिषी । अन्यतो विलोक्य । अयमिह
भीषणोज्ज्वलाकृतिः भगवान् मृडदेवः ।
प्रादुर्भवद्दुरितदूषितात्मनां जनानां
प्रायश्चित्त्युपक्लृतये प्रयुक्तदण्डः ।
देवस्य प्रियतनयः सरोजबन्धोः
केन स्यात् पितृपतिरेष नो नमस्यः ।

---

(११) साधारणमिति । क्रतुभुजां साधारणं वदनम् । अग्निमुखा वै देवा इत्युक्तेरिति भावः । पुरस्त्रीसौभाग्यलोपि त्रिपुरदाहेन तत्स्त्रीणां वैधव्यदानादिति भावः । गिरिशस्य तृतीयं अक्षि शङ्करभाललोचनस्य वह्निमयत्वादिति भावः तिरस्कृततमश्चयं परिहृतध्वान्तसंघं इत्यर्थः स्वाहा तपःफलं स्वाहादेव्याः तपःपरिणामभूतमित्यर्थः तेजः उषर्बुधः वैश्वानर एव साक्षात् प्रत्यक्षतः आविरस्ति । इह क्लीबलिङ्गमहिम्ना तेजसो विशेषणं तच्च उषर्बुधस्येति बोध्यम् ।

विहस्य । हन्त मदीयस्योपवाह्यस्याकस्मिकोऽयं सम्भ्रमः ।
तथाहि ।

नमस्तुभ्यं मातर्महिषमथनीति प्रणमतां
गिरो गीर्वाणानां भयचकितमाकर्ण्य परितः ।
निरस्तोऽपि स्वीयैर्जवधुतविषाणः प्रतिभयो-
घणात् कुर्वन् घण्टां द्रवति महिषो दक्षिणदिशं ॥

अन्यतः चक्षुषी चारयन् साशङ्कं ।

विकटवदनो विद्युत्पुञ्जप्रकाशशिरोरुहो ।
धृतनरशिरोमालस्तालप्रमाण महाभुजः ।
ज्वलननयनः शालप्रांशुस्ततोऽपि भयङ्करः ।
क इह गगनाभोगात् दीप्यमवा तरदिकक्षः ॥

विमृश्य ।

मन्ये स एष रक्षःपतिः निरृतिः यो दिक्पालपङ्क्ति-
निविष्टः पठ्यते ।

विहस्य । अहो महत्सौहार्दमस्मिन्नम्बिकापुरिवर्गस्य ।
प्रत्युद्गच्छन्त्यग्रे स्निग्धन्ति स्वागतानि पृच्छन्ति
कथयन्त्यवसरमुचितं प्राप्तेऽस्मिन्निरृताविह प्रमथाः ।

स्पर्शसुखमनुभूय । कथमिदं शीतलङ्गदमम्नमिवाच्छनमङ्ग
विलोक्य ।

मधुराननो धृतहारकुण्डलो
नयनं धिनोति सलिलाधिपतिः ।
परिपूर्णशीतकरविम्बधरः
नभसोऽवकाश इव तारकितः ॥

अहो इतरतेजः परिभावुकमेतस्य तेजः ।

अथवा । नाद्भुतमिदं यदन्यत् न्यग्भावयति प्रचेतसस्तेजः ।
इदमध्युषितामाशां प्राप्य च निर्वान्ति येन तेजांसि ।

अन्यतोऽवलोकयन् सौरभातिशयं विभाव्य ।

कएष तावत् सकलेन्द्रियतर्पणेन परिमलेन लिम्पतीव प्रपञ्चं । निर्वर्ण्य ।

कृत्स्नं येन श्वसिति भुवनं मित्रवान् वीतिहोत्रः
सम्याहारं फणधरकुलं शम्भुरन्यूनमूर्त्तिः ।
सोऽयं चूडाकलितसुमनः शेखरोद्भिन्नमाध्वी
लुभ्यद्भृङ्गी निनदमुखरं गन्धवाहः समेति ॥ (१२)

सकरुणमिव । कथमेतद्दर्शनेन किमप्युत्सुकमिव हृदयं । हृष्यति हृषीकमस्मिन् स्वात्ममतिर्जायते च किमिदं मे चरितं । (१३)

अथवा समान नाम्नां सङ्गे स्यादैक्यधीर्यथा पयसोः ।

कथमयमन्यतश्चक्षुरागच्छ । कोयमकपिङ्गलाभ्यां सन्निधन्ने समग्र भूषणमणिप्रभाप्रकलितशार्वरान्धकारोम्ष्य:पुरुषोऽथः विभाव्य ।

---

(१२) कृत्स्नं येन श्वसितीत्यस्मिन् पद्ये मित्रवान् प्रशस्तमित्रः भूम निन्दा प्रशंसास्वित्यादिना प्रशंसायां मतुप् । अन्यूनमूर्तिः परिपूर्णमूर्त्तिः अष्टमूर्तित्वादिति भावः ।

(१३) अथवा पक्षान्तरे इत्यर्थः समाननाम्नां एकाभिधेयानां सङ्गे ऐक्यधी एकत्वबुद्धिःस्यात् । दृष्टान्तमाह पयसोः पयश्च पयश्च पयसी तयोः यथा क्षीर नीरयोरित्यर्थः दुग्धोदकयोर्मेलने यथैकत्वबुद्धिःस्यात् तद्वदेकनाम्नोर्मेलनेऽपीतिभावः ।

अस्तोकसम्पदलकापुरसार्वभौमः
स्वर्णौणिभृत्तटनिवेशितचन्द्रचूडः।
यत्राधिराज्यकमलातडिदम्बुवाहो
दिक्पालमौलिमणिरेष विलिप्त एषः॥

सप्रश्रय हर्षं। अहो अवाङ्मनस गोचरं मम सौभाग्यं तथाहि।

देवोऽप्येष पुरान्तको नयनयोरध्वानमाढौकते
दूरादेव सुरैर्विमुक्तसरणिर्दुग्धेन्दु कुन्दच्छविः।
एष कुलसदोपवाह्यवृषभ स्कन्धानुवृत्तिस्खल-
च्चूड़ावल्गितसिद्धसिन्धुलहरी झाङ्कारकोलाहलम्॥

सम्प्रति हि।

नाथे समेयुषि समीपमुपोढ़हर्षं (१४)
उत्थाय देव्यपि कुचस्खलितोत्तरीया।
प्रायः ससम्भ्रमतया करदत्तहस्ता
प्रत्युद्गमिष्यति शनैः कतिचित् पदानि॥

पुनर्विलोकयन्। अति मनोहरं वर्त्तते।

गन्धर्वसिद्धसुरकिन्नरसुन्दरीणां
आसामुदारनयनैर्वदनारविन्दैः।

---

(१४) नाथे समेयुषि इत्यस्मिन् पद्ये करं दत्तहस्ता कराय दत्तौ हस्तौ ययेति विग्रहः। स्वनाथस्य दत्तहस्तादानाय प्रसारित निजहस्ता सतीति भावः। यद्वा सख्या इति शेषः करे दत्तौ हस्तौ ययेति विग्रहः सख्या दत्तहस्ता इति यावत्।

सञ्जायतेऽद्य परितः परिपूर्य्यमाणं
सम्पूर्णचन्द्रशतदन्तुरमन्तरीक्षं ॥

यावद्देवीं प्रणमामि

इष्टानिष्टापादकच्छेदकेभ्यः शक्रादिभ्यो दिक्पतिभ्यो नमोऽस्तु।
सर्व्वैरेतैः सर्व्वदोपासितायै देव्यै भूयः शैलपुत्र्यै नमोऽस्तु ॥

इति प्रणम्य ऊर्द्ध्वमवलोक्य । हन्त शून्यमेव गगनतलं ।
न सुरा नाशापतयो नाप्सरसो नो विमानानि ।
पुनरपि तदेव केवलमवशिष्टं भीषणं तिमिरं ।
मन्ये निवर्त्तित शर्व्वाणीदर्शनैर्गतमेव गीर्व्वाणैः ॥

सहर्षं ।

अत्र मम पक्ष्मिमाणि प्राञ्चिप्रायस्तपांसि सम्यञ्चि ।
देवोऽपि सार्द्धममरैर्येन प्रत्यञ्चितस्त्र्यक्षः ॥

तत् इदानीं अवसरो मम सर्व्वमङ्गलाचरणमूलोपसर्पणस्य । यावदुपसर्पामि । परिक्रामन् । साशङ्कं । अपि नाम प्रसीदेदम्बिका ।

उपचितघनरागो रागकल्पव्रतत्याः ।
प्रसभमखिलविघ्नध्वान्तसङ्घस्य हन्त्र्या ।
कमलमिव करेण प्रातरर्को नलिन्याः ।
कुवलयनयनायाः किन्नु पाणिं ग्रहीष्ये ॥

अग्रतोविलोक्य । इदमुपवनद्वारं यावत् प्रविशामि ।
प्रवेशं नाटयन् । स्खलनमभिनीय । सनिर्व्वेदं

कथमिदमविषमेऽपि स्थले स्खलितचरणः । अथवा इहैव स्थित्वा प्रसादयिष्यामि देवीं । कृताञ्जलिः ।

वलद्विषि गतत्विषि द्रविणराजि हाहारुजि
प्रचेतसि विचेतसि त्रिनयने त्रपामीलने ।
सुरद्रुहि रणाद्रुहि त्रिभुवनद्रुहो मस्तकं
रमर्द महिषस्य यत्तदिह नौमि देव्याः पदम् ॥ आकाशे लक्ष्यं ।
कैलीरावोऽयरंसीच किल विजयया सार्द्धमावध्यमानो
नाकृष्टा दृष्टिपाताःकिल विजयजुषश्चन्द्रचूडस्य वक्त्रात् ।
उत्क्षिप्ते पादपद्मे किलमणिकटको नोच्चकैर्वा शिशिञ्जे ।
मातःशैलेन्द्रकन्ये ! महिषविमथनं नाम कोऽयं विलासः ॥

निमितं सूचयित्वा ।

दुर्लभे प्रियतमापरिरम्भे स्पन्दसे किमिति दक्षिणबाहो ! ।

हन्त वेत्सि न गिरं गगनोत्थां मल्लिका विघटनेक-कठोराम् । निःश्वस्य । आकाशे ।

तत्ताद्दृशं युवतिरत्नमदृष्टमूल्यं
दुष्प्रापमल्पसुकृतस्य ममेति युक्तं ।
त्वद्वाक्यमत्र किल यत्र जनित्वमूलं
तत् किं तवाम्ब ! सदृशं करुणार्द्रतायाः ॥

अथवा स्वकर्म्माधीन सुखदुःखः किमित्युपालभे देवीं भगवतीं कात्यायनीं ।

अतः प्रियतमालाभनिःसम्बलजीवन स्तोषयिष्यामि स्वयमुपहृतैरहं कुसुमैराम्बाम । पुनराकाशे ।

पश्याम्बिके प्रणतकामितकल्पवल्लि
सा मल्लिका प्रियतमा यदि दुर्लभा स्यात् ।
अस्तु स्वहस्त करवाल विदूनकण्ठं
वक्त्रं ममाद्य पदयो स्तव रक्तपद्मं ॥ इति कौक्षेयकस्तवक्षिप्य समायतं ।

अस्तु ममभक्तिरतुला त्वत्पदयोर्देवि पद्मपाटलयोः ।
अपि च जनमान्तरे वा प्रेयस्या सङ्गमोऽस्तु मल्लिकया ।

इति खड्गं कण्ठे न्यस्यति। आकाशे हा णाह मारुम ! परित्ताअसु
परित्ताअसु कहं ण पेच्छसि मं रक्खसहत्थगअं णं तु
पुढमं वि कुञ्जरहत्थादो रक्खिदह्मि । हा अम्ब गोरि
सच्चं रक्खस हत्थे दिस्संह्मि । हा ताद ! हा अम्ब ! एसं
हदह्मि तुह्माणं गोरिप्पसादलद्धं एक्कउत्तो मल्लिआ ।

हा माइच्छिव्विसे से भअवदि एशा तुहम्मा मसमीवेण
णीदह्मि ।

जाएसिणेहे ण हिमगिरिं उज्झिअ आगआसि ।

हा सहि णोमालिए ! हा कालिन्दि ! दुलहं इन्दीवरं
तुह्माणं दंसणं ।

मारुतः । सकम्पमाकूतं । खड्गं कण्ठादपनयन् ।

कथमयं गगनगोचरः करुण करुणो मल्लिकायाःस्वरः ।
सविषादवितर्कं ।

किम्प्रासाद शिरःस्थिता जलधरैर्नीता तडित्शङ्कया
किंवा मण्डयितुं दिवं सह सुरैराखण्डलेनोद्धृता ।
अहोस्वित् शशिनः कला निपतिते धात्रा स्वयं शम्भुना
केन व्योमनि भीकरात्तकुररी तारस्वरं क्रन्दति ॥

ऊर्द्ध्वमवलोक्य । हन्त महान् प्रमादः ।

कोऽप्येष व्योम्नि घोरश्वयइव तमसां भीमदंष्ट्राकरालं
बिभ्राणोवक्त्रमुग्र भ्रूकुटि पृथुशिराः पिङ्गलश्मश्रुकेशः ।
व्यक्तं नक्तं चरो द्राक् व्रजति हहधिक् दैवमास्वाङ्कदेशात्
प्रभ्रष्टा वेपमाना पतति तडिदिवाम्भोधरात् मल्लिकेयम् ॥

सवाष्पं । हा ! निष्करुणता विधातुः ।

या सोपानपथादपि प्रियसखीवृन्दैरहम्पूर्व्विकां
दत्तां हस्तपरम्परामवतरत्यालम्बमाना शनैः ।
सेयं भङ्गुरमध्यमापतति हा ! तुङ्गाश्रमः शृङ्गतो
मत्तैरावतलोलितेव नलिनी मन्दाकिनीपाथसः ॥

भवत्वेनां धारयामि । खड्गं निधाय प्रसारितोत्तानकरस्तिष्ठति ।

ततः प्रविशति मारुतहस्तगता वेपमानाङ्गी मल्लिका ।

मल्लिका । हा ! पडिह्म ।

मारुतः । सवाष्पं । महाभागे ! मा भैषीः ।

चेतःसमुच्छ्वसतु शाम्यतु वेपथुस्ते
नातः परं निशिचराद्भयमन्यतो वा ।
मन्वस्य मे परिजनस्य वराङ्गि ! हस्त-
पर्य्यङ्कदेशमकुतोभयमागतासि ॥

मल्लिका । सहसा विलोक्य । अम्हहे महाभाओ हा !
महाभाअ ! इति कण्ठमालिङ्गय ।

मारुतः । महाभागे ! किमेतत् ।

मल्लिका । सुचिरं निश्वस्य सलज्जं । आआसवासो पामा-
भादो तुमहं महाभाअ मैलणासिम्मूसणं मसन्ती अज्ज
णिसीहे णोमालिअं विवत्तिजणा मरणकिअणिस्सआ भव-
णुज्जाणं गएव्व तक्खणागएण । सभयं । केणवि रक्खसेण
गहित्ति घेत्तूण गअणमग्गेण आगदुम्म अज्ज तुह हत्थे
पाडिदह्मि ।

मारुतः । सोच्छ्वासं ।

दिष्ट्या बन्धुजनप्रिये मम हृते स्वाख्यानसूनं नासुच:
दिष्ट्या ते कुणपाशिना नवसुधा दृष्ट्यं न लुप्तं वपु: ।
दिष्ट्या तस्य करच्युतासि गगनात्तूर्णं पतन्ती पुन:
दिष्ट्या चम्पकमालिकेव दयिते प्राप्तासि वक्षो मम ॥

मल्लिका । तुम्हे ण्ण देवदादुईस्सा कहं एत्थ सवि
हिदा ।

मारुत: ।

सोऽहञ्च सुन्दरि ! शिर: कमलार्च्चनेन ।
त्वामेव लब्धुमभिरोद्धुमना भवानीं । कण्ठे हस्तेन प्रदर्शयन् ।
तमेनमधिपिस्वं करेण खड्गं ।

मल्लिका । ससम्भ्रमं । महाभाग्न मामा साहसमणु
चिट्ठेहि । इति हस्तं रुणद्धि ।

मारुत: । सस्मितं ।

आक्रन्दितेन तव भीरु ! निवारितोऽस्मि

मल्लिका । स्वगतं । हन्त अदीदो उत्तन्दो एव्व वण्णिदो
सकरुणानुरागं । अम्महे मह किदे पाणपरिच्चाए विवसिदो
महाभाओ । नेपथ्ये । आ: को नाम नृपग्रामदुत्सङ्गवर्त्तिनी
मचूचुरमनुजकन्यां अद्य सा न दृश्यत एवाङ्कदेशे यामहं
निकोत्पाते सिंहलद्वीपं नेतु कामोऽस्मि । उभावाकर्णयत: ।

मारुत: । विहस्य । हन्त देवीप्रभावेण मत्करपतितां
नाज्ञासीदेव मूर्खो राक्षस: ।

मल्लिका । सभयं । हृत्थि ! पुणोवि णि वट्टइ रक्खसो
वेपते ।

मारुत: । विहस्य । महाभागे ! मा भैषी: । ममाम
पादपान्तरिता तिष्ठ । तदहमेनं निहन्मि दुष्टराक्षसं ।

मल्लिका । कहं महाकाएण रक्खसेण सङ्गच्छइ ताओ।

मारुतः । विहस्य । भीरु! किं महाकाय इति ।

तीव्रोष्णदुर्विषहवीर्य्यभृतः परेषां
तेजस्विनो न गणयन्ति वपुर्महत्त्वं ।
यत्पद्मरागशकलाकृतिरद्रितुङ्गं
कान्तारज भस्मयति काष्ठचयं स्फुलिङ्गः ॥

मल्लिका । सभया पादपान्तरिता तिष्ठति ।

मारुतः । सकृतूहलं सावष्टम्भं मास्ते ।

ततः प्रविशति गवेषयं
नाटयन् यथोद्दिष्टः सबन्धुर्मो राक्षसः ।

सोऽहं सिंहलदेशकाननपतिर्य्यस्याग्रतो नामतः
मृत्युः कम्पितकूटशाल्मलिरपि स्थातुं न च क्षमते ।
तस्यैवाद्रितटस्थितस्य विकटग्रीवस्य रक्षःपते
रक्षस्थां मम कन्यकामपहरन् किं नो गतायुर्नरः ॥

मल्लिका । सभयं । अम्मो हे एदिणा भअङ्कर सरीरेण
कहं णु कुवलअदलकोमलस्स महाभाअस्स सङ्गमो होइ ।

मारुतः । दृष्ट्वा सविस्मयं । अहो एतस्य वपुः प्रकर्षः ।

उद्ग्रीवैः परमोच्चितव्यमचलाभोगं शिरोभङ्गुरं
विन्ध्यप्रस्थविशालभीषणमुरस्तालोपमानौ भुजौ ।
भूयः कम्पितभूतलश्चचरणन्यासस्तदेतद्वपुः
सृष्ट्वा प्राक् परमाणुतां गमितवान् मन्ये विधिः पर्वतान् ॥

उद्यौ । रे रे अमङ्गलस्पर्श !

क्रव्याशिनों किसलयादपि कोमलाङ्गीं (१५)
शृङ्गारसागरसुधां स्मरजीवनाड़ीं ।
तामिन्दुबिम्बवदनां स्पृशतः कथन्ते
क्रव्यादपाश शतधानपभालमूर्द्धा ॥

राक्षसः । मारुतं विलोक्य । सत्यसयमिव घोरः । प्रोपहासं

साधु रे परिस्पन्द ! साधु ।

कस्त्वं करालविषभीषण कालसर्प-
स्फारस्फटाफलकरत्नशिलाविशिष्टां ।
तां कन्यकामहह सम्प्रयमस्मदङ्क-
पर्य्यङ्कमध्यविधृतामसुधाविशङ्कं ॥

मारुतः । सक्रोधं । आः लोकविद्विष्टाचार ! कन्यका-
चोर ! भूयः किमेवं तव व्यवहारः । सावधीरणं ।

रे रे पापमते प्रतीच्छसि कथं बालां पलाशाधमि-
स्त्वेवाज्याहुतिमाशु धाव चपल त्वं चेत् तवासि प्रियः ।
नो चेदेष करोमि खड्गदलितत्वत्कन्धरान्तःशिरा
नालष्ठ्युतकवोष्णरक्तलहरी मेदस्विनीं मेदिनीम् । (१६)

राक्षसः । सभ्रूभङ्गम् । आः ममापि विकटग्रीवस्य
पुरतस्तिष्ठन् मुक्ताशङ्को विकत्थते च । निर्वर्ण्य सप्रत्यभिज्ञं

(१५) हे क्रव्यादपाश राक्षसापसद इत्यर्थः याप्ये पाशप् इति कुत्-
सितार्थे पाशप् नपफालनविशीर्णा इत्यर्थः । ञिफला विसरणे इति
धातोः परस्मैपदाल्लिट् ।

(१६) रे रे इतरक्षिन् पद्ये त्वं तव आत्मनः प्रियोऽसि चेत् धाव
पलायस्वेत्यर्थः जीवितेच्छा चेत्तर्हि तिष्ठेति भावः ।

न्मतं। अयमेव मद्गुरुणाऽस्मल्लिखितलक्षणः। कश्चित् कन्या चोर इति खड्गजिह्वेनोपदिष्टः। प्रकाशम्। मूढ! स्वजीवनिरपेक्ष! मनुष्यडिम्भ! दिष्ट्याऽऽगतस्त्वमिह तिष्ठतु तावत् कन्या।

त्वामेव कोमलकलेवरमात्मपेषं।
पिष्ट्वा पिबामि मधुरं रुधिरं यथेष्टं।

इति माकन्दं स्कन्धे बद्ध्वा धारयति।

मल्लिका। सत्वरं पादपान्तरान्निर्गत्य साक्रन्दं। भद्द रक्खस! एषा तुह अज्जओ मुञ्च महाभाअं मं उण भक्खेहि।

राक्षसः। अनाकर्णितकेन निष्क्रान्तः।

मल्लिका। सवाष्पं। हन्त णीदो एव्व रक्खसेण महाभाओ। सकरुणं। हा सअललोअलोअण चंद! हा कंदप्प दप्पो हरंग! हा सज्जण चूडामणि! हा लच्छी विहारमंदिर! हा मल्लिआ हिअअ वल्लह! माकन्द! कहं णु दे सव्वलक्खण लक्खिओ तारिसो विग्गहो रक्खसाहारो जादो। हत्थि अहं एत्थ पावा मन्दभाइणी दे सव्वबन्धणस्स पुणो पुणो कारणम्हि। निःश्वस्य। णिप्फलजणाए मरणं वि दुल्लहं एव्व आसी। अम्ब भअवदि विस्संभरे! देहि मे विवरं। दिशो विलोक्य। हन्त कालज्जणं गोलुणीरव्वे भुवणे कहं गच्छामि। कं सरणं अक्कन्दामि। इति रोदिति। प्रविश्य ससम्भ्रमा मन्दाकिनी।

मन्दाकिनी। वत्से! मामैषीः।

मल्लिका। विलोक्य। सवाष्पं। अम्हे भअवदी! भअवदि! परित्ताअसु परित्ताअसु। इति पादयोः पतति।

मन्दाकिनी । सकरुणमाविश्य ।

अयाधि भीरु ! युवयोः सरसानुबन्धो
भावात्मकेन नयनेन मयैष सर्व्वः ।
रक्षांसि यान्तु विलयं विविधाश्च दोषाः
दैवं प्रसीदतुतमां शिवमस्तु भूयः ॥

अपिच ।

रक्षो हस्तगतो मारुत इति मास्म करोर्मनसि सन्तापं ।

विख्यात विक्रम विडम्बित फल्गुनस्य
रक्षांसि नो परिभवे प्रभवेयुरस्य ।
किं जृम्भमाण किरणस्य तिरस्क्रियायां
बालस्य वासरमणे रलमन्धकाराः ॥

नेपथ्ये । चटचटध्वनिः ।

मन्दाकिनी । विलोक्य सहर्षं । अज्ञातमारुतपराक्रमे ! पश्य महाभागस्य चरिमानं । एष खलु ।

स्कन्धे स्थितोऽस्य गतभीरसिना शितेन ।
छिन्ते शिरो विरटतः पिशिताशनस्य ।
दम्भोलिकोटिकठिनेन नखाङ्कुशेन
पञ्चाननः करिपते रिव कुम्भकूटं ॥

मल्लिका । सहर्षं । सभयं च पश्यति ।

मन्दाकिनी । सानन्दम् ।

अभिहतमस्तकः पतति वेपितभूमितलं ।
रजनिचरो गिरीन्द्र इव वज्रभिन्नतटः ।

सविस्मयं ।

इहह कबन्धतोऽस्य धृतदिव्यवपुः पुरुषः

प्रचलित भूषणो झटिति कोऽपि समुत्पतितः ॥

सविस्मयानन्दं ।

मल्लिका । भअवदि ! अच्चेरं एदं अदिभीसणादो रक्खसादो दिव्व पुरुषो उट्टिओत्ति । पेच्छ पेच्छ पदक्खिणी कदुअ सविणअकलिअंजलि पणविअ मोलिदेसो पणमदि अ महाभाअं ।

मन्दाकिनी । देवपात्रभूतोऽयं मन्ये कोऽपि पुरुषः शापवशेन राक्षसत्वमापन्न इति ।

नेपथ्ये । कलकलः । आकर्णयतः ।

मल्लिका । सभयं । भअवदि ! रक्खसभएण मण्णेमि पुणो वि रक्खसा आअच्छन्तित्ति ।

मन्दाकिनी । विलोक्य । वत्से ! एते सवाष्पवदनं तातममात्य विश्वावसुं पुरस्कृत्य त्वदन्वेषिणः परिभ्रमन्तः सत्वरमितस्ततो गृहीतविविधायुधा वीरपुरुषाः । पुनर्नेपथ्ये । हा पुत्रि मल्लिके । नन्विन्द्रनीलालोकादपि तिमिर बुद्ध्या बिभेषि ।

मल्लिका । सवाष्पं । हा तादो अ कन्दइ ।

मन्दाकिनी । एहि वत्से ! त्वद्दर्शनशोकविह्वलं तातमाश्वास्य प्राणदान महोपकारिणं विजयिनं मारुतमपि सम्भावयाव: । इति निष्क्रान्ते ।

इति पञ्चमोऽङ्कः ।

## अथ षष्ठोऽङ्कः ।

ततः प्रविशति काषायाम्बरयुगलहस्तः पुरुषः ।

पुरुषः । सहर्षं । अहो ! विहसिअ वहुप्पइ सुअण्हावलुहिज्जंत मल्लिआ करग्गहण मङ्गलसिलाहविज्जोणाह संवर अंभिमहंतो क्खु सिणेह बंधो विज्जुराअ उत्तवकहराअस्स जेण अज्जसण्णिहिदविवाहसम्भाविअ महाजण णिअम्बाहसस्सारजोग्गो णजहवणेक्कदेसो विभज्जिअदिण्णो । अविअ अक्खिअ णिच्चिन्दं वितंदविज्जुराअं अगणअन्तो णिअसोअरीं रमअन्तिअं अज्जकलपिङ्गस्स दावपवट्टइ आ । विहस्य । सोमघर कूलदंसणं आरभिअ महन्तो क्खु अहिलासो अज्जकलपिङ्गस्स रमअन्ति अभिजेण साहिलासेहिं णअणं चलेहिं पुणो पुणो पेच्छइ । सअं एव्व अमग्गे गदुअ किंवि किंवि संलवइ पोसेइ अणिअत्तअणेण वि अप्पणो मिच्छापदाणाइ । पुनर्विहस्य । सा उण विसम्भिअ परिहरदि एदस्य दंसणं । विमृश्य । जं होदि तं होदु । सव्वहा लहिस्सदि एव्व रमअन्तिअं अज्जकलपिङ्गोवि । जेण अघडिअ घरणेक्क सिलाहणिज्जा मन्दाइणी णावज्जीअदि । णाह सम्बरएण तेहिं तेहिं सक्कारेहिं । जइ सा मसेइ कमलिणीं चन्दाणंविपरप्पराणुराअं उवभावेदि कुमुदिणीं वा चण्डअरेण संघडेइ । दिसंअ महहत्थे णाहेण अभिणवुम्मिसन्तकोअणादपसुवससस कोमलं एदं कसाअम्बरजुअलं

ताए एव्व दाउ त्ताजाव बिवाहमङ्गलोवअरणव्वापुड़ं भअ-वदीं दट्ठुं एदं गोपुरणहकंचण सालभञ्जिआ पुञ्जप्पभा-घड़िअ विज्जुलआ पिञ्छिलं अमच्चवीसवसुमन्दिरं पवि-सामि । प्रवेशं नाटयित्वा पुरतो विलोक्य । एषा रमअन्तिआए पिअसही महुअरिआ इदो एव्व भवणादो आअच्छइ । प्रविश्यात्र मधुकरिका । सानन्दं स्वगतं । साहु अवि गोओ सम्व-रअ वस्रणोवाओ दिट्ठो अणिअरसाइरण महप्पहावाए भअवदीए मन्दाअणीए । निःश्वस्य । सनिर्वेदं । हन्त सहजो कोवि सत्तू एव्व रुद्दराओ पिअसहीए रमअन्तिआए जोमालिअं विअ मक्कडअस्स णं कलपिङ्गअस्स संघडअइ । सोच्छ्वासं । एदंवि उवदिट्ठो एव्व महकसोपिअ सहीए विअ जाणिदव्वो वाओ भअवदीए । पुरुषं विलोक्य । अज्ज एक्कघरवासपरिअएण जाणीअदि । सम्वरअस्स परिअणो चवलओ णाम एसो ।

पुरुषः । उपसृत्य । महुअरिए ! अवि जाणीअदि कहिं भअवदि मन्दाइणी वट्टइत्ति ।

मधुकरिका । स्वगतं । कीस एसो भअवदिं असेसइ होदु पुच्छिस्सं दाव । प्रकाशं । चवलअ ! कीस भयवदी ।

चप । विहस्य । णं एसा इमस्स किए मुगवेन्दुसेहर विलासिणोए समुल्लसिअं आभासभासिदं ति णाह सम्व-रअस्स सव्वीसम्भभट्टाणं वट्टइ ।

मधुकरिका । स्वगतं । भअवदि णामो तुह्माणं वंचण-प्पहावस्स ।

चप। स्वगतं। कष्टट्ठं। रमअन्तिआवुत्तम्। प्रकाशं। अज्जविसेसदो दट्ठव्वा। जं रमअन्तिआ अणुजलइदव्वा सा क्खु अम्हएण कहराएण दिस्स वि वामसीला याणुमसइ कलपिङ्गअस्स परिणम्रं।

मधुकरिका। सोपहासं। स्वगतं। अज्जअं चरणताड़णा फलो भविस्सदि हदासस्स कलपिङ्गअस्स परिस्समो। प्रकाशं। चपलअ! ईसक्करं क्खु रमअन्तिआए अणाअन्नणं भअवदीए

नेपथ्ये॥ नवमालिके किमिति विलम्बयते। भगवत्या देशको नाम समयः सुरभिमारुतागमनसुभगं लीलोद्यानं प्रविष्टायाः त्वदागमनं प्रतिपालयन्त्या मल्लिकायाः। तदद्याहि विविक्ते सविशेषं मण्डयतां अद्य विवाहोचितैर्माङ्गलिकैर्भूषणैः। यावन्न परापतति सम्बन्धिवर्गः। उभावाकर्णयतः

मधुकरिका। स्वगतं। जुज्जइ मारुओ वि तहिं चिअ कलअण्ठभमरअसहाओ सारसिआए निउढं आणिओ वट्टइ ता अहं वि उदूए संणिहाणी पवट्टामि। प्रकाशं। चपलअ एदे कञ्चुइणो भअवदीए आदेसं ववहरन्ति। ता गच्छ समीवट्ठिआ। सुलहदंसणा एव्व भअवदी। इति निष्क्रान्तौ प्रवेशकः।

ततः प्रविशति मारुतः कलकण्ठो भ्रमरकश्च।

मारुतः। भ्रमरक! अपि सत्यं उपकण्ठवर्त्तिलतामण्डपमध्यास्ते मल्लिका।

भ्रमरकः। आह! णं भणामि। कालिन्दि णोमालिआ किं पारद्धमङ्गलमण्डणाहिं चिट्ठन्ति।

मारुतः । सोच्छ्वासं ।

(१७) आशंसाभिरहर्दिवं त्वधिरुजा यन्मिप्सितं प्राङ्मया-
नैराश्यं यदलाभकातरधिया प्राणेष्वपि प्रस्तुतं ।
हस्तप्राप्तमिवाद्य जीवितफलं तद्भाति न ज्ञायसे
मातस्त्वं भवितव्यते ! कथमिव प्रादुर्भविष्णो पुनः ॥

---

(१७) आशंसाभिरिति । अहर्दिवं आशंसाभिः अप्राप्तस्य प्राप्तुमिच्छाभिः हेतुभिः अपि लभेय मीप्सितवस्तु इत्यपरिमिताभिराकाङ्क्षाभिरित्यर्थः । अधिरुजा तु अधिकरुजाऽपि इत्यर्थः । तु पादपूरणे भेदे समुच्चये ऽवधारणे इति मेदिनी । अनवरत चिन्तोत्थ मानस महाव्यथेनापि इति भावः । मया प्राक् यत् वस्तु लिप्सितं पुनरपि इच्छितं वाञ्छाहेतुक दुःसह मनोव्यथा सम्भवेऽपि न वाञ्छासन्त्यक्तेति भावः । तदपि हन्त तदन्तर शायिनी जगति चिक्कणगोत्र सुगेत्यादिना प्रागुक्त प्रकारेणेति बोध्यं । नच तावन्मात्रं अपितु शरीरत्यागे प्रावर्त्तीत्याह । प्राक् मयेति अत्रापि काकाक्षिन्यायात् दनुष्यते । प्राक् मया यदलाभे यस्य वस्तुनोऽलाभे कातरा या धीः तया हेतुना । यद्वा यदलाभकातर धिया मया इत्यन्वयः । प्राणेष्वपि नैराश्यं निस्पृहत्वं प्रस्तुतं प्रस्ताव विषयीकृतं अनुष्ठितमिति यावत् । अपिच जनान्तरे वा प्रेयसा सङ्गमोऽस्तु मल्लिकया इति सङ्कं कण्ठे न्यस्यतीति प्रागुक्त प्रकारेणेति बोध्यं तत् जीवितफलं जीवितफल भूतवस्तु मल्लिकेत्यर्थः । अद्य हस्तप्राप्तमिव भाति । हे मातः ! जनदम्ब भवितव्यते ! भवितव्यता देवि ! पुनः भूयः कथमिव केन प्रकारेण प्रादुर्भविष्णो प्रादुर्भाव मेष्यन्ती इति न ज्ञायते न बुध्यते ज्ञा धातो रात्मने पदात् भावे लट् । न ज्ञायसे इति पाठे न बुध्यसे इत्यर्थः । कर्मणि लट् । साम्प्रतिकस्तव प्रादुर्भाव एव मत्समीहितत्वेन परिणामवान् दृश्यते । किन्तु जगदम्बात्वेन अनियम्याया स्तव भूयो भविष्यन् प्रादुर्भावोऽनेकं विधेवं विधत्वाभ्यां संदिह्यत इति भावः । अत भावि-

कलकण्ठः । मा मा सन्दिग्धोष्ठाः । ननु ते हस्तप्र
मेव जीवित फलं भवान्याः प्रसादतः । यतः स्व कण्ठ
साहस निःशङ्क प्रवृत्त एव हस्ते पातिता मल्लिका ।

भ्रमरकः । णाह एसो लदावलयन्तरेण लआम
मग्गो ।

मारुतः । भ्रमरक! नीरन्ध्र पत्र पटल मांसललता
निरुद्धेऽपि प्रदेशे परिजनापातशङ्का दुःस्थित हृदयो
पारयामि प्रचलितुं ।

भ्रमरकः । णाह! भअवदीए आदेसेण वेत्तपाणी
उज्जाणादो दूरणिरत्थीकखु परिअणो ।

मारुतः । सहर्षं । ननु सर्व्वदा प्रमादिनी भगवत
नीतिः ।तदादेशय मार्गं ।

भ्रमरकः । इदोइदो । सर्व्वे परिक्रामन्ति ।

कलकण्ठः । विलोक्य । अहो सर्व्वतः प्रत्यासन्न प
णअमंगलपिशुनोदात्त परिष्करणममात्य विश्वावसो
वनम् । तथाहि ।

---

लभ्यते इति पदस्य भवितव्यं कर्म तस्य भावः भवितव्यता इति व्याप
धर्मत्वेन अर्थकल्पन मयुक्तं तथात्वे संबुद्धे वैयर्थ्यात् किञ्च मातरि
विशेषणस्य असाङ्गत्यात् । तन्नामक देवतीर्थकत्वे तस्या व्यनियम्य
च प्रमाणन्तु जातएष महाक्रूरः सर्वसंहारकारकः एतस्य मोहनार्थं
देहि भार्य्यां यथोचितां । एवं शिववचः श्रुत्वा स्वकं पृष्ठं ददर्शह तत
देवी समुत्पन्ना योच्यते भवितव्यता रूपलावण्य सम्पन्ना पीनोन्नत पयो
धरा इत्यारभ्य ततः प्रीतात्मा सा प्राह देव्यग्रे प्रणता स्थिता मदाधी
न मिदं विश्वं ब्रह्मविष्णु शिवात्मकं कालस्यायं ममाधीनः कोपि मां न
वेत्स्यति इत्यादीनि ।

(१८) दत्ता नूतनचित्र पङ्क्तिरमले प्रासाद भित्तिस्थले
बद्धा वन्दनमालिकास्तततो द्वारेषु माध्वीमुचः।
किञ्च क्षौमवितानमण्डलगत प्रालम्बमुक्तावली
शुम्भत्काञ्चनतायमानसुभगा वाह्याङ्गणक्षोणयः॥
अपिच।
...रा...वां...लिन्दध्वजशिखरपटीपल्लवान् लोलयन्तो।
...ढ़ारस्तोरणस्रक्कुसुम नवसुधा विप्रुषां गन्धवाहाः॥
...र्षन्तो वल्गुवल्गत् कुचभरमभितः कुङ्कुमोत्कर्षवेगा-
...द्वे...तानां परिजन सुदृशां कङ्कणाकङ्क्तानि॥
...भ्रमरकः। कथं दृष्ट्वा। वाह! किं कङ्कणगाढ़ो एव्व केवलं

---

(१८) दत्ता नूतनचित्रेति। नूतनचित्र पङ्क्तिः अमले प्रासादभित्ति-
...ले दत्ता तथा द्वारेषु सालम्बि पुष्पमालासु माध्वीमुचः मकरन्द-
...ानिगल्यः वन्दनमालिकाः तोरणानि तत ततो नद्धा यद्धाः। तुर्ध-
...न्दनमालासु तोरणं परिकीर्त्तितं इति हलायुधः। तोरणं नाम
...रणोऽस्त्रीवहिर्द्वारमित्यमरोक्त्या वाह्यः प्रतीहार इति केचित् तत्
...। तथात्वे प्राक् स्टहयज्ञ कालएव बद्धानां तोरणानां प्रकृत पद्ये तन
...तो नद्धा इति सर्वत्रापि नवीन वद्धत्वोक्तौ स्वाङ्गत्यापत्तिः। अत
...तदुक्तिवलात् यदि परस्परेण तिर्य्यक् वद्ध पुष्पमालादिकं स्तम्भद्वयं
...द्वये च संस्थाप्यते तत् वहिर्द्वारादिपदेरुच्यत इत्यन्येषां व्याख्यानमेव
...क्तं प्रतीमः। किञ्च अपिच क्षौम वितानानां मण्डलेषु निवद्धेषु
...ता बद्धाः प्रालम्बमुक्तावल्यः ऋजु लम्बिमुक्ताहाराः ताभिः शुम्भन्ति
...ासमानानि (शुभ शुन्भ भासने इति धातोर्निष्पन्नं) हार प्रतिफलनेन
...रस्पर किरण सम्पर्केण चेति भावः। यानि काञ्चनानि तैः ताय
...ानाः विस्तारीभवन्त्यः (ताय सन्तानपालनयोरिति धातोर्निष्पन्नं)
...तएव सुभगाः मनोहराः वाह्याङ्गण क्षोणयः सन्ति इति शेषः।

कहिदो एसो दूदोतदोप धावन्तवार.सुन्दरीणिअम्बविम्बलम्बि
मणिमेहलासहस्स झङ्कारमुहरोवोलन्त सम्भलं सेउरज-
णभूषणारवणिमज्जन्तमङ्गलमुरअ सङ्खकाहलपणवणिस्सणो
सणिछिदभूदेववग्गपरिज्जजन्त पुसपुसाहघोस मङ्गली गीत
जरं मण्डलाभुत्तवपिसप्पव्वइ लच्छीपरिणओ । चच्चण मङ्ग
सङ्गीअ महुरी-हाम-वेस-वंहि बुंह वड्ढिअ जअसद्द हलह
लामेदुरी महन्तो क्खु एसो उच्चव कोलाहलो ।

मारुतः । निश्वस्य । सखे कलकण्ठ ! ।

परिणयसमय स्तन्वङ्गा यथा यथा भजति सान्निध्यं ।
संशय दोलारूढं तथा तथा वेपते हृदयं ॥

भ्रमरकः । णाह आअदं क्खु लआभवणपेरंत्तं ।

मारुतः । सहर्षं । किमिदमेव मल्लिकाधिवाससुभग
लताभवनं ।

कलकण्ठः । ननु श्रूयते प्रसाधन समय सम्भाव्य
मानोत्पन्न विरतो भूषण झङ्कारः ।

भ्रमरकः । णाह ! एसा मङ्गल ण्हाणविसुद्धसुद्धपरिक्खा
पण्डरंग सविसेस लोहणिज्जदंसणा । णोमालिआ खि
टठिअ विवाहणेवच्छमहुग्घदाररमणिज्जवेसा एत्थ लआन्त
रेण । उज्जाण लच्छि विअ सक्खा लक्खिज्जइ तत्तहोदी

कलकण्ठः । पल्लवजालान्तरेण विलोक्य । एषा खलु
वलितमुखी कालिन्दी नवमालिकाभ्यां किमपि संलपति,
तदिह लतान्तरेण प्रविश्य गूढं पश्यामः । तथा कुर्वन्ति ।

ततः प्रविशति यथोद्दिष्टा मल्लिका नवमालिका कालिन्दी च

मल्लिका। सहिम्रो तुम्हाणं उप्पलं भअमणेण एव्व । कुसुमदो मए एसो मण्डणविही।

नवमालिका। सहि! मा मा अक्खरा सम्भावेहि।

मारुतं विलोक्य सहर्षं जनान्तिके। कालिन्दि! आअदो एव्व पिट्ठभाए महाभाओ किं पच्चाभिज्जामो। जेण पच्चअ्त्रओ होइ पिअसहीए।

कालिन्दी। सहि मामा पच्चावेहि समए एव्व पच्चासण्णो।

नवमालिका। स्मित्वा। सहि मल्लिए! णं तुएवि अस्स विप्पलद्धम्हि।

मल्लिका। सानुतापं। कदा।

नवमालिका। णं रत्तिअं अञ्जे वि वञ्चिअ पाणपरिच्चाए पवुत्तासि।

मल्लिका। लज्जते।

कालिन्दी। दिट्ठिआ तक्खणासादि अरक्खसेण। वेक्खण महाभाअस्स हत्थे पाडिआसि।

कलकण्ठः। सखे! यत्रैव पतिता मल्लिका कथं तत्रैव स्थले सन्निहितोऽसि।

मारुतः। अहं खलु अन्तरुपवनं विविधसरणावलितेन सग्रहस्तत्रैवातिष्ठं।

मल्लिका। कालिन्दि णहि सो रक्खसो। अविदु कोवि दिव्वपुरुषो एव्व। कहिअं भअवदीए महाभाअस्स जणणकार मित्त सोत्ति। उभे विस्मयं नाटयतः।

कलकण्ठः। सखे ! क्व गतः स महापुरुषः। यस्त्वया जुगुप्सितादस्योजन्मनो विमोचितः।

मारुतः। स खलु मां सुहृद् जहिमाऽऽभाष्य सखे ! यदा मां स्मरिष्यसि। तदा सन्निधास्ये विधास्ये च तवाभिमतमिति वदं स्तिरोऽभूदेव।

नवमालिका। ता तुमं एव्व विप्पलंभसीला।

मल्लिका। अह्मो आलम्भो।

नवमालिका। सहि! कहेहि किं अणुजलो तुह एसो अणुणअविहि णवेत्ति।

मल्लिका। सलज्जस्मितं। सहि ! मह एसो ईरिसेत्ति ण पारेमि लज्जाए पसंसिदुं। दूरे क्खु वअणाणं पिअसहीए पसाहणगुणो।

कलकण्ठः। अस्यगुक्तं मल्लिकया वचनानां दूर इति। अन्वेकैकं इति वर्णनमतिक्रामति। इदमेव तावत् पश्य।

अस्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो-

मुग्धश्यकास्ति तिलको मदिरेक्षणायाः।

मारुतः। साभिलासं।

आविष्टरागमभिराममुखारविन्द-

निष्यन्दलग्नमिव मे हृदयं द्वितीयं॥

कलकण्ठः। सोत्पातं। सखे ! अपहृतमेव मम वचनं।

भ्रमरकः। णाह ! पेच्छ पेच्छ। एसा णाहेण दिण्णा वेढइ हारयट्ठी कन्धरामूलम्मि तत्तहोदीए।

कलकण्ठः। निर्वर्ण्य। सत्यं सैवेयं वयस्य दोरन्तर विहार दुर्ललिताहार वल्ली। विलम्ब्य।

मुक्तावलीस्मर विदाहविपाण्डुमूले
नष्टा सकान्ति जित कम्बुनि कण्ठकाण्डे ।

माकतः ।

निश्चिन्वती मृगदृशो वदनं मृगाङ्कं
नष्टव पर्वभिरिव सम्भीतिता नभस्तः ।

कलकण्ठः । सप्रणयं । वयस्य ! ननु सर्व्वोत्तरस्ते प्रतिभोत्कर्षः ।

माकतः । सखे ! सञ्जप्रतिभाकूरमुदार विरचितमुल्लसित गर्भक ग्रथितमालती कुसुम सौरभ्य लुभ्यदिन्दिरान्दरी मधुरसमारब्ध मङ्गलसङ्गीतकं अनर्घ्यताटङ्क करपवित कोमल कपोल विन्यस्त पत्र लता सङ्कुलं अतिरभि हिमजलशवल कुङ्कुम घनसार सरसाङ्गराग ज्जित घनतुङ्ग कुचकुम्भाभोगप्रेङ्खोलहारं विशालनिविडनितम्बमण्डल मण्डितकाञ्चन काञ्चीगुण पद्मरागमयूखसमञ्जिष्ठारञ्जितमङ्गलक्षौमं आमुक्तमौक्तिक नूपुरकिरणविमद्दंससंसेवितचरण पुण्डरीकं अभिराममस्याः वाहनेपथ्यं । निर्वर्ण्य । अथवा पुनरुक्तान्येवानवद्याङ्ग्याण्डनानि । निःश्वस्य ।

(१०) नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं
हासश्रीपरिकल्पिते स्तनतटे हारोऽवहारः कथं ।

---

(१०) नेत्रोपान्तेति । वामाक्ष्याः सुन्दर्य्याः नेत्रोपान्तवतंसिते त्रोपान्तेन अपाङ्गेन लघया कटाक्षेणेत्यर्थः वतंसिते कर्णपूरीकृते तिपुटे नीलोत्पलं निष्फलं अक्रियाकारित्वादिति भावः । वतं सिते

पिच्छालक्तकपातनं चरणयोः पीड़ाफलं ताम्रयोः
वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥

भ्रमरकः । कहं ण दीसइ चूलापदिसे सिहाम

नवमालिका । सहि ! इमस्सिं रअणमुउरे पेच्छ

अवअवलच्छी मण्डिअं मङ्गल मण्डणं । इति द

दर्शयति ।

मल्लिका । सलज्जं पश्यति ।

मारुतः । सखे ! पश्य ।

एतावति त्रिभुवने नवयौवनोद्यत्
उद्दामरूपमहिलाजनमण्डितेऽपि ।
नास्त्येव विभ्रमनिधेरुपमानमस्या
यद्यस्ति रत्नमुकुरे प्रतिविम्ब एषः ।

---

इत्यत्र वष्टिभागुरिरल्लोपमित्यल्लोपमित्यल्लोपः । अवतंसो न स्त्रियां
कर्णपूरे च शेखरे इति विश्वः । हार श्रीपरिकर्मिते मन्दहार
परिष्कृते स्तनतटे हारोनु मौक्तिकमाला वा अहारः कथं निष्
किं इत्यर्थः । कलहायत एवेति भावः । हारोमुक्तावलौ युद्धे
विश्वः । ताम्रयोः चरणयोः पिच्छालक्तक पातनं लाक्षारस
पीड़ाफलं पीडैव फलं यस्येतिविग्रहः । पीडामात्र प्रयोजक
भावः । स्वभाव सुरभौ प्रद्मिनीत्वात् सहज पद्मगन्धे इत्यर्थः । त
कमलमुकुल मृद्वी फुल्लराजीवगन्धः सुरत पयसि यस्याः सौरभं त
इति । वपुषि शरीरे अनुलेपव्यथा उद्वर्त्तन प्रयासः व्यर्था नि
जनेत्यर्थः । अत्र नेत्रोपान्तवतंसिते हार श्रीपरिकर्मिते र
स्वभाव सुरभौ इति साभिप्रायेण विशेषण चतुष्टयेन स्वाववि
मण्डन वस्तुविशेषाणां नैष्फल्य कथनात् परिकरालङ्कारः । अ
परिकरः साभिप्राय विशेषणैः इति लक्षणात् ।

नवमालिका। सहि! पेच्छ पेच्छ। णिसग्गसिणिद्धणील-
अलुप्पल सोहादुल्लक्खविसेस कज्जललेहं सिणिद्धमहुर-
लदुव्वलगण्डमूलप्पान्तपल्लत्थ कत्थुरिआ पत्तलआ विभा-
अ सोहारिमअं मणभरकुङ्कुम दिलअ लंच्छिअ
ोज्जणिड़ालदेसप्पड़िविम्बिद गोरी चरणलग्ग लक्खारुणा
ुर अिरचन्दलेहासोहं उदार सीमन्त पद्धादिससुन्दर
न्दूर कन्दलिअ कन्दप्पपआवङ्कुरं। सअलजणलोअणाणं
ान्दमण्डलं पड़िविम्बइ तुह वअणम्बुअं॥

मल्लिका। णोमालिए! कीस सिहामणिणा ण
ण्टिदह्मि।

नवमालिका। सहि! किं विसुमरिदं णं तुए एव्व
हेअं रक्खणादो णिपड़ंतीए पुणो वि पब्भट्ठो सोत्ति।

मारुतः।

ा अिखामणे! किं पुनरपि पतितोऽसि पश्य दौर्भाग्यं।

दिष्ट्या कथञ्चिदस्याः प्राप्तवतस्ते पुनः सङ्गं।

नवमालिका। ता पसीद। मारुतं कटाक्षेण दृष्ट्वा। एदस्स
ा वह्राणुराअस्स सम्बरअस्स देहि करकमलं। आणंदेहि
ा वअं।

मल्लिका। सान्तर्सन्यु भारं। सहिओ तरुणसिहण्डि
च्छ सिणिद्ध सामल मङ्गलङ्गस्स महाभाअस्स मारु-
अस्स दंसणादो पहुदि जं अणो पुरुषो हिअएणवि ण
न्तिओ तेणेव्व सच्चेण सपामि इदो वरं वि णाहं अस्स
क्खस्सं महाभाअ पुसलाअसमुद्दावारिहिप्पवाह विगाह
वत्त हिं तेहिं णेत्तेहिं।

कलकण्ठः। सखे! शृणुय श्रवणपीयूषं।

मारुतः। सानन्दं। अयि मन्मानसविहार मल्लिका मल्लिके!।

तव हृदयसमूढ़ प्रेमरागैः शुभाङ्गि!
प्रति नवपरिवाहस्यन्दहृद्यैर्वचोभिः।
स्मरहुतवहदग्धः शीतलैः सर्वतोऽहं
स्नपित इव सुवाणि! प्राणिमि प्राणनाथे॥

पुनर्नेपथ्ये। नवमालिके! ननु भण्यते लब्धतामभि
तस्य मौहूर्त्तिकगणगृहीतः परिणयसमयः। आकर्णयन्ति।

मल्लिका। सवाष्पं। हद्धि! पुणोवि भअवदी णाइ
मह सहि णोमालिए उट्ठेहि उट्ठेहि जाव ह
एक्कदा। आअमिस्सदि भअवदी ता एत्थ लआवल
गदुअ किम्बि तुह्मो पत्थ इस्सामि।

नवमालिका। सहि। आणाहाणा जोग्गो जणो
पत्थीअदि। ता जहिट्ठं अङ्गे अहिलसिए अत्थे
इअ णिव्वट्ठेहि भअवदीए आदेसं।

मल्लिका। सहि! विसाद संभमवे विरंगो ण पारी
उट्ठिउं वाह पूरलइअ णअणा ण सक्कुणोमि दट्ठुं
ता तुमं मह हत्थं ओलंविअ उट्ठावेहि। इति ह
प्रसारयति।

सख्यौ। संज्ञया मारुतं पाणिग्रहाय चोदयतः।

मारुतः। साध्वसं नाटयति।

कल। सखे! नायं साध्वस समयः। अनुभूयतां चि
कालकाङ्क्षित मल्लिकायाः पाणिग्रहण महोत्सवः।

मारुतः । लतावलयान्निर्गत्य मल्लिकायाः पार्श्वं सपुलकं [illegible]हाति ।

मल्लिका । सहर्षं । सहि ! णोमालिए ! अखारिसो ह हत्थ सोहग्गो जं गहिअ मेत्ते एव्व हत्थे अमुअ [illegible]रस सित्ताइ विअ णिव्वुदाइ मह अंगाइं ।

मारुतप्रवलम्बमानैवोत्तिष्ठति ।

मारुतः । अदत्त प्रतिवचन एव मन्दमन्दं नयति ।

सख्यौ । सस्मित मनु गच्छतः ।

कालिन्दी । सहि मल्लिए ! पत्तम्ह लअं इरिदा कहेहि [illegible]हणिज्जं ।

मल्लिका । सनिश्वासं । सहि णोमालिए ! कस्सिं लदा [illegible]ले आअदह्म ।

नवमालिका । इदं वहललआ सुमरस परिवाह मेदुर [illegible]रिमल लोल लोलम्ब पुञ्ज वद्ध तिमिरं मन्दारमूलं ।

मल्लिका । सवाष्प गद्गदं । हन्त मए एव्व वड्ढिदो एसो [illegible]न्दारो । सानुनयं । ता विवित्ते एत्थ पदेसे किम्वि तुम्हे [illegible]त्थेमि ।

कालिन्दी । अवहिदह्म ।

मल्लिका । जीअउ जीविदणिव्विसे सो मारुओ । इत्यु-[illegible]क्ते वैलक्ष्यं नाटयति ।

सख्यौ । परस्परं पश्येते ।

मल्लिका । अइ जीविदणिव्विसेसे णोमालिए पिअसहि [illegible]ालिन्दि जस्स परिपुसचंद सुन्दराङ्गस्स महाभाअस्स [illegible] सुस्सूसण सोहग्ग पच्चासा पडिट्ठाविअ विहडन्त

जीविआए मए पुढमदंसणादो पहुदि एत्तिअं क
पेक्खन्तीए सहिदाअ मन्दमन्दवलिअवरहीहिआरविन्
अरन्दवाहिणी उज्जाण मारुआ । आअसिदाअ पअर
अरहअभुअदण्डकुण्डलिअ धणुहरिद टङ्कारघोरा अ
अरहुङ्कारा । अहिवाहिदाअ पल्लविअ माअन्दकु
विहरन्तकुहुमुह घडिउड्डमर पञ्चमः पवञ्चा वस
रदिअहा । आआसिदा अ तुम्हे किसलअ तप्पक
हिं मुणालभङ्ग हाररअणेहिं कदलीदलधप्पितवीअणे
कप्पूरक्खोदचच्चिक्क सम्पादणेहिं अण्णेहिं वि तेहिं
मअणोवआरेहिं । जेण वा तह रक्खसहत्थादो पव
गअणम्मि णिपड़न्ती तस्सिं णिसीहे रक्खिदह्मि ।
पुण्णभाइणीणं एव्व सुलहस्स महाभाअस्स जइ दुल्लहो
सङ्गमो ता मम्मि सुहं पावएसु ण एक्कतमं खणंवि
जीविअधारणंति । ता आमन्तेमि तुम्हे पुणोवि जणण
दंसणम्म । सप्रश्रयं अञ्जलिं बद्धा । सगद्गदम् । सहि !
किरे एव्वं पणमिअ विवित्ते विण्णाविदव्वो तुए सुम
वउलआ लंच्छिअ दोहर सिणिद्धलोअणा पुण्डरीओ
जणो जह परलोअ गदाए वि मह जलञ्जलिदाई हो
इति रोदिति ।

मारुतः । सकरुणं । स्वगतं ।

(११) एतानस्याः शिव शिव तनुत्याग वद्धोद्यमायाः
कल्याणाङ्ग्याः करुण मधुरान् शृण्वतो मे विलापान्

(११) एतानिति । अस्याः विश्वायणेः गौरीप्रसाद कल्या

दाक्षिण्येन द्रवति दहयोऽलीयते मोहवृत्त्या-
म्लायत्यन्त्यां स्फुटति हृदयं हर्षतस्फायते च ॥

कालिन्दी। पडिहदं दे अमङ्गलं।

नवमालिका। अश्रूणि वर्त्तयति।

मारुतः। प्रकाशं।

(१२) वीणाभिराम कलकोमलवाणि! रामे
मा मा वरोरु! करुणं भण वाम वामे।

---

इत्यर्थः। अविलष्टत्व बोधनाय इदं शब्दप्रयोगः। शिव शिव इति खेदे अयं च वक्ष्यमाणस्य अमङ्गलत्वाभिप्रायेण तनुत्याग वद्धोद्यमायाः शरीरत्यागमकृत प्रयत्नायोः कल्याणाङ्ग्याः जगन्मङ्गल गात्र्या मल्लिकाया इत्यर्थः। करुण मधुरान् दीनमनोहरान् एतान् विलापान् इमानि परिदेवनानि शृण्वतः मे हृदयं मनः कष्टं दाक्षिण्येन वर्द्धमानेन द्रवति दयया विलीयते प्रणश्यति। मोह-वृत्त्या मोहविरचेन मोहप्राचुर्य्येणेति यावत्। वृत्तिर्विवरणाजीव कैशिक्यादि प्रवर्त्तने इति मेदिनी। म्लायति ताम्यति अन्त्या पीड़या स्फुटति दलति हर्षतः प्रीत्या स्फायते प्रचुरीभवति च ॥ अत्र मनसः द्रवीभावाद्यवस्था पञ्चकोक्ति क्रमेण प्रयुक्तैः कतिपयपदैः तदवस्था वीजान्यपि दर्शितानि। यथा अस्याः इत्यनेन विश्वावसोः गौरी प्रसाद लब्धेति दाक्षिण्यं तनुत्यागवद्धोद्यमाया इत्यनेन प्राणहानेच्छुरिति दया। कल्याणाङ्ग्या इत्यनेन अतिदुर्लभ मनोहराङ्गीति मोहवृत्तिः। करुण मधुरान् इत्यत्र करुणा इत्यनेन परलोकगदा एवि मह इत्या-दिना दीना विलापा इत्यार्त्तिः। मधुरा इत्यनेन तु सो जणो इत्या-दिना स्वविषया विलापा इति हर्षः। इह अन्त्येति प्रयोगः साधुरेव तथाच प्रयोगाः शिरोऽर्त्तिं नाशयत्याशु रसोऽयं मुचुकुन्दकः ॥ अनुशो-चति यः कृत्वा सोऽर्त्तिं प्राप्नोति केवलां इति ॥

(१२) वीणाभिरामेति। हे वरोरु! वीणाभिरामकलकोमलवाणि!

हा हन्त बन्धुजन चित्तसरोज हंसि
दूरं विमुञ्च सहचारिणि साहसानि ॥

अतएव रामे मनोज्ञे इत्यर्थः । यद्वा अङ्गने इत्यर्थः । रामः पशु-विशेषे स्यात् इत्यादिना मनोज्ञेऽपि च वाच्यवत् रामाङ्गना हिङ्गुलिन्यो रिति विश्वः । वाम वामे अतिसुन्दराङ्गने इत्यर्थः । यद्वा अतिमनो-हरे इत्यर्थः अवसु आबाधे च इति द्विर्भावः पुंवद्भावश्च । कामि वाक्य-त्वादनेन स्वपीड़ा द्योत्यते वामं सव्ये प्रतीते च द्रविणे चातिसुन्दरे । इत्यादिना वामापि च स्त्रियां इति विश्वः । करुणं दीनं मा मा भण मैव वादीः इत्यर्थः मामेत्यादरात् द्विरुक्तिः । अथवा काठवेन किमयं निषेध इत्यत उक्तं वीणाभिरामकलकोमलवाणि इति दीनत्वेऽपि अतव मनोहरं ते भणनमिति भावः । आव्यत्वे कुतो निषेध इत्यत उक्तं । वाम वामे इति त्वत्करुणभणने त्वन्निष्ठं वामात्वं तव तदनौचित्य-मत्वा अत्यपीडा हेतुरिति भावः । लोके उत्तम वस्तुनः पीड़ायां तन्निष्ठेनोत्तमत्वेनैव तस्य तदनौचित्य मत्वा तदभिज्ञानां मैत्यनुभवः यथाह महाकविः । यद्यपि न कापि हानिः परकीयां चरति रासभे द्राक्षां । अनुचितमिदमिति मत्वा हा हा हाहेति तप्यते चेतः । इति इयं च द्राक्षा स्वाद रसिकस्योक्तिः । तथाच प्रकृते संबोधद्वारा इति वा-मात्वं तद्रसिकस्य संबोधकस्य कामुकस्य पीडां द्योतयतीत्यतः आबाधे चेति शास्त्रप्रवृत्तिं युक्तामेवेत् पश्यामः । हा इति विषादे हन्त इत्यनुकम्पायां हन्त हर्षेऽनुकम्पायामित्यमरः । हे बन्धुजनचित्तसरोज हंसि ! बन्धुजनानां चित्तान्येव सरोजानि तेषां हंसि इति संबुद्धिः इह रूपकनिदर्शनाभ्यां यथा हंसी सरोजानां प्राणठ प्रतिपत्त्वकत्वेन आश्रयि दुर्दशायां आश्रयदुर्दशा तथा तद्दुर्दशायां त्वदेकाश्रयाणां बन्धुजनानामपि दुर्दशा इत्याशयः सूच्यते सहचारिणि मया सह संचरमाणे इत्यर्थः साहसानि मत्से हुतं पावकस्य इत्यादीनि दूरं विमुञ्च इति योजना सहचारिणि इत्यनेन तु मत्समीपवर्त्तिन्यास्तव मद्दौर्लभ्याभिप्रायेण साहसान्य साम्प्रता नीत्याशयः सूच्यते ।

नवमालिका। जनान्तिके। कालिन्दि! मन्दारिसत्रणो इए वाप्रड़े वि समाणं एव्व महाभाअस्स वअणं ता मत्ते ण जाणइ पिअसही अज्जवि महाभाअं।

मल्लिका। सहि सुणुवे! साहसंति कहं भणिज्जइ जेण मम्म जीवलोएण मकाह भअकाअरहिअएण तह णिसीढदुग्गमे पदेसे एक्केण गदुअ समन्तभूमण्डले क मण्डणाअ कम्बुराअ सुन्दरे कन्धराकण्डे खग्गप्पहारेण साहसं अणुट्ठिअं। तस्सिं दुलहे जीविअपरित्ताअ साहसं अणुचिट्ठामि एव्व ता ण एत्थ पडिजला होहि। विसवेहि पुणो वि मह वअणेण महाभाअं। सगद्गदम्। णाह साहं मन्दभाइणी एक्कस्मिन्निं खणे तुह दढपरिरम्भा ता जणअन्तरे वा तुह पिअसङ्गमं कंखेमि, सा उण मह सहजा मालिआ णाहेण मरगअ कवाड़ सिणिद्ध विसाले वच्छत्थले मणिव्विसेसं सव्वदा धारणिज्जा। इति मारुतं दृढं आलिङ्गति। सानन्दं साभ्रुं स्वगतं। कहं पिअसहीए सव्वङ्गीण चन्दणसारवरिस सरिसो महाभाअ परिरम्भ संवादी फंसो। मत्तेहिअअ सण्णिहिदो मं सुहावेदि। प्रकाशं। सहि णोमालिए! जाणेहि एदं पच्छिमं परिरम्भं।

सख्यौ। सस्मितं। स्वगतं। णहि णहि पच्छिमो परिरम्भो अविदु पुढमो दुइमो वा।

मारुतः। परिरम्भमाण एव सानन्दं।

कल्याणाङ्गि चाऽनुरक्तमनसा त्वं येन सम्प्रार्थ्यसे
यस्यार्थे सुमुखि! त्वया पुनरसुत्यागेऽपि सन्नह्यते।

मल्लिका । स्वगतं । कीस मकरन्दिअं अलिङ्गिअं पिअ-सहोए । प्रकाशं । सहि ! कहिं सो ।

मारुतः ।

सोऽयं सुन्दरि ! पञ्चबाणविशिखश्यालीढदोरन्तर

स्वेरोत्पीड़ितपीवरस्तनतटस्त्वद्दोर्लतापञ्जरे ।

मल्लिका । अम्महे महाभाओ । सहर्षसाध्वसं । सलज्ज झटित्यपक्रामति ।

मारुतः ।

मामा ससाध्वसमवेहि विलोलनेत्रे

दासे जने किमिति सम्भ्रमकातरासि ।

किं युज्यते वत मया चिरकाङ्क्षितस्य

मध्ये वराङ्गि ! परिरम्भसुखस्य भङ्गः ॥

मल्लिका । सव्रीडं सास्मयञ्च । सहिओ साधु साधु ।

कलकण्ठः । सहसोपसृत्य । कल्याणि ! मैवं वादीः ।

विश्वोत्तरं प्रियसखं मम भूषयन्ती

न त्वं समस्तगुणशालिनि विप्रलब्धा ।

त्वत्प्राप्ति लोभमृगतृष्णिकयावगाढो

दिष्ट्या सखप्रवरक एव तु विप्रलब्धः ॥

ततश्च । सौरभ्यसम्पदिव चन्दनपादपस्य (१२)

ज्योत्स्नेव शीतकिरणस्य मणेःप्रभेव ।

---

(१२) सौरभ्येति हे शोभने ! त्वं अस्य मारुतस्य इत्युह्य यत्रपदं चन्दन पादपस्य सौरभ सम्पदिव शीत किरणस्य ज्योत्स्नेव मणेः प्रभाकान्तिरिव विभूषणं भव । ते तव अमुना मारुतेन सह सम्बन्धः

त्वं शोभने! भव विभूषणमस्य तासां
तैर्व्वामुनास्तु तव चाभ्युदयाय लब्धः॥

भ्रमरकः। उपसृत्य। णोमालिए! दिट्ठिआ वड्ढाम
णाहाणं अब्भुदयेण।

प्रविश्य प्रहृष्टवदना मन्दाकिनी।

मन्दाकिनी। देवी लक्ष्मीः पार्वती वागधीशा
शचीन्द्राणी रुक्मिणी सत्यभामा।
सावित्री सारुन्धती याज्ञसेनी
शर्मिष्ठा च स्वस्तिदाः स्युः प्रहृष्टाः॥

सर्वतो विलोक्य। साशङ्कं। क्व नाम इतोगता भवेल्लता-
भवनात्मल्लिका। लतान्तरेण दृष्ट्वा सानन्दं। हन्त पूर्णा इव
मनोरथाः। अत्र हि मन्दारमूले मारुतः।

अयमति सुकुमार श्चामरम्येण सामि
प्रमितइवमृगाङ्को शोभनीयोऽङ्ककेन। (१४)
विलसति नयनान्तं चारयन् व्रीडनम्रे
मदनशवलनेत्रे मल्लिकाया मुखेन्दौ॥

---

आश्रयणं तासां सौरभ्य सम्पदादीनां तैः चन्दनपादपादिभिः सम स
इव लब्ध इव चन्दनपादपाद्या श्रयणमिवेत्यर्थः। अभ्युदयाय अभि-
वृद्ध्यै अस्तु भवतु इति विध्यर्थे लोट्। अत्र प्रथमान्वये सौरभ्य
सम्पदित्यादीन्युपमानानि त्वमित्युपमेयं विभूषणीभावः साधारणोधर्मः
इति बहूपमा। द्वितीयान्वये चन्दनपादपाद्याश्रयणं उपमानम्।
मादृशाश्रयणमुपमेयम्। तासां ते इति तु प्रत्त्वये उद्देश्यकथनं
अभिवृद्ध्यर्थकं परिणामोधर्मः इति पूर्णोपमा उपमाद्वयस्य परस्पर नैरपे-
क्ष्यात् संसृष्टिः।

(१४) सामिप्रमितो अर्द्धमितः मृगाङ्कः अर्द्धचन्द्र इवेत्यर्थः।

प्रकाशं । नवमालिके ! किमिति विलम्ब्यते ।

नवमालिका । अम्महे भअवदी आअ देव्व ! पव्वु...

भअवदि अह्मेहिं ण विलम्बीअदि ।

मल्लिका । सगद्गदं । भअवदि ! परित्ताअसु परित्ता...

इत्यञ्जलिं बद्धा आगच्छति ।

मन्दाकिनी । मल्लिकामालिङ्ग्य । वत्से !

तुल्य प्रेमणि महाभिजन्मनि जगन्नेत्राभिरामे जने

त्वं कल्याणि ! सदानुरक्तहृदयस्त्वाख्या सकामा भव ।

सोऽयं च प्रतिपद्य पुण्यसुलभां त्वां तुल्यरागश्चिरा-

दन्तः सम्भृतमङ्गजज्वरमहोदाहं जहात्वञ्जसा ॥

नवमालिका । सानन्दं । भअवदि ! णिव्वुत्तमणो...

इमस्सिं मिहुणे णिअणिम्माण वेअड्ढीए सफलत्तणेण चि...

कअट्ठो होदु पआवई पसीदन्तु सव्वस्स परिणअप्पव...

कलुसिआइ वन्धुजणस्स हिअआइ ता माइ विरसिव्वि...

णाणं तुह्माणं हत्थेण पदिज्जा महाभाअस्स करम्मि पि...

चही ।

मल्लिका । स्वगतं । सव्वहा सव्वमङ्गलावअणं पमा...

एव्व ।

मन्दाकिनी । नवमालिके ! किं मयाद्य दातव्येति

ननु प्रागेव तस्मिन् व्यतिकरे ।

याच्छिद्य राक्षसकरादमुत देहेव रक्षिता देव्या ।

अधिगतमर्पित मस्ते हस्ते दत्तास्य सर्वमङ्गलया ॥

अपिच । अस्मिन् परस्परकृतिप्रकृते विवाहे

सेयं निजैर्न गुरुभिः प्रतिपादनीया ।

प्राणेश्वरोदयपरायणा हर्षयोगा
केनार्पिता कुमुदिनी शशलाञ्छनाय ॥

ापि । लोकयात्रानुवृत्तिमात्रक्रिया सम्प्रति । एहि वत्स
रुत !

मारुतः । आदिशतु भगवती ।

मन्दाकिनी ।

एषा विश्रुत वैभवस्य यशसामूर्जस्वलानां विधेः
पुत्री विश्ववसो रमेव जलधेः पुण्येन लब्धा चिरात् ।
एनां तुभ्यमहं ददामि चरितुं धर्म्मान् सह श्रेयसे
देवेन स्वयमङ्गजेन विहिते रागानले साक्षिणि ॥

कलकण्ठः । फलितमस्मत्सुखसुरद्रुमेण ।

नवमालिका । प्रसन्ना अम्हाणं कुलदेवता ।

कलकण्ठः । सहर्षं । भगवति ! सर्वाकारानवद्यं ममु
त्वम्बमालोच्य प्रसीदति हृदयं । पश्य

सहजघनविलासौदार्य्यं सौन्दर्य्यराशे-
र्जननयनचकोरानन्दने चन्द्रिकायाः ।
परिणय कुतुकं यत् चानयोः श्लाघनीयं
कनककुसुमदाम्नः सोऽयमामोदयोगः ॥

नवमालिका । मल्लिकां निर्व्वर्ण्य । सनिश्वासं । स्वगतं ।
विणाम अज्जविअ महाभाअस्स सव्वदा वल्लहाभवे पिअ-
ही ।

मन्दाकिनी । विहस्य । वत्स मारुत ! ।

मारुतः । सायङ्कं । आज्ञापयतु भगवती ।

मन्दाकिनी ।

ज्ञातज्ञातव्यसारे नहि भवति परेणोपदेष्टव्यमास्ते ।
वात्सल्यं केवलं मां मुखरयति ततो ब्रूमि कल्याणबुद्धे

मारुतः । सप्रश्रयं । शृणोति ।

मन्दाकिनी । मल्लिकां हस्ते गृहीत्वा ।

एकापत्यं हि सेयं जनयितुरसवो बान्धवानां तदस्याम् ।
मा स्यात् कालान्तरे ते स्वयमयमुदितःस्नेहबन्धो क्रशीयान

मारुतः । सलज्जं । हन्त वात्सल्या दयङ्गनीयमप्य

शङ्क्यते युष्माभिः ।

कलकण्ठः । भगवति ! इत्थमतिप्रसक्ते युष्माकमभ्यर्थ

वयस्यमधिकृत्य सहृद्यमुत्तरं नहि पश्य ।

स्नेहोऽस्यां स्थिरतामगादिति सकृद्दृष्टेऽपि तुल्यं जने
ख्याता स्यावश इत्यसाम्प्रतमसौ यद् भ्रू वशे स्यास्यति ।
दाक्षिण्येऽस्य समोऽस्ति नेति सुहृदि स्नेहोक्तिरस्यां स्फु
नैनं स त्यजतीति सर्वमनयैवाध्यस्यते तन्निशि ॥

मन्दाकिनी । सविनयं मल्लिकां प्रति । पुत्रि ! त्वम

किञ्चिदुपदिश्यसे ।

मल्लिका । आणवेदु भअवदी ।

मन्दाकिनी ।

शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता
दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि ।
सब्रह्मातिथिसत्कृतौ गृहभरे नैस्तन्द्रमाबिभ्रती
वत्से ! किं बहुना भजस्व कुशलं भर्त्तुः प्रिये जाग्रत

मल्लिका । सलज्जं मनसाङ्गी करोति ।

नवमालिका। उट्ठ्मो उवद्देसो।

मन्दाकिनी। वत्स मारुत! इदानीं दुरात्मनः शम्बर-
य वञ्चनाय प्रतिश्रुतागमं स्मर माकन्दनामानं तं दिव्य-
प्रं गृहीतमल्लिकावेशः सन्निधत्स्वेति।

मारुतः। ध्यानं नाटयति।

ततः प्रविशति मल्लिकावेशधरो माकन्दः।

माकन्दः। सखे मारुत! अयमहमस्मि। साधयामि
ाभिलषितं। मन्दाकिनि मारुतयश्चं विस्मयं नाटयन्ति।

कालिन्दी। जनान्तिके। णोमालिए! सो एसो दिव्व-
ो जो रक्खसभावादो मोइदो महाभाएण।

नवमालिका। कालिन्दि! अच्चेरं जो पिअसहीए
क्खणप्पवट्टो सो अज्जरक्खणे पि पवट्टइ। मल्लिकां
त। सहि! पेच्छ पेच्छ। अस्सवि कावि पिअसही अह्माणं

मारुतः। महापुरुष! तत्वर भगवत्या यत् प्रागुपनाथितं।

माकन्दः। बाढ़माचरामि। प्रविश्य काषायाम्बरयुगलहस्ता
विका। भअवदि! एदाइ चवलएण आणीदाइ अम्बराइ।

कलकण्ठः। सस्मितमम्बरे गृहीत्वा निष्क्रम्य मन्दाकिनीवेश
ः प्रविश्य। अयमस्मि भगवति!।

मारुतः। पततु त्वच्चरणयोः शम्बरः।

मन्दाकिनी। कालिन्दि नवमालिके प्रति। वत्से! युवाभ्यां
ह कलकण्ठेनानुवर्त्तितव्योऽयं महापुरुषः।

उभे। जं भअवदी आणवेदि।

माकन्दः। सस्मितं। भगवति! तद् गच्छामि शम्बरका-
रिणयाय।

मन्दाकिनी । वत्स साधय प्रागुपदिष्टेन पथास्म
भिलषितं ।

माकन्दः। एहि सखे कलकण्ठ ! तुल्यस्त्वयाहं मारुतस्
कलकण्ठः । महापुरुष ! सर्वेषां नः पूज्यतमोऽ
तदेहि गच्छामः ।

मन्दाकिनी । रमणीयास्मदाश्रमोपशल्यभूमयः ।

ततश्चात्र मारुतं प्रति ।

उत्कूजत्कोकिलालीकवलितमहकाराङ्कुरामेघशङ्का
प्रक्रीड़न्नीलकण्ठस्वनमुखरतमालान्धकारोपगूढाः ।
उद्वेल्लद्यानसीमामरिचकिसलयग्रासगर्वच्चकोरी
चञ्चुर्लौहित्यभारा विदधतु युवयोः स्वैरलीलासु सौख्यम् ।

अपिच ।

क्रीड़ाश्रान्तिषु तासु तासु कुसुमश्रेणी वितानाञ्चिते-
ष्वाराद्दाललता गृहेषु शनकैराराधयिष्यन्ति वां
सद्यो निर्दलितप्रसूनमकरन्दासारमम्भोत्थिता वा
ताम्भोमसरस्तरङ्गकलहं सालापवाचालिताः ।

इति निष्क्रान्ताः सर्वे । इति षष्ठोऽङ्कः ।

---

## अथ सप्तमोऽङ्कः ।

ततः प्रविशति नवमालिका ।

नवमालिका । सहर्षं । दिट्ठिआ वड्ढिओ मूढो स
रओ । जेण तत्तारिसवेससुउमारं तं दिव्वपुरुषं मग्गि
त्ति मअन्तो णिव्वुत्त विवाहविही सअलजणग्गोसि

ामादु सहीएत्थ विक्कुगाश्च घरे आअदवन्दो अहवा किं
त्थ अच्चेरं । जं गहिश्र परमत्थाणं वि तहिं पिअसही
ही पुणो पुणो होइ । अज्जव्व अहं मअण सरपडण
ज्जरिश्रं वाश्च सम्बरश्र मुस किस्तिमलज्जामदणवावुढं तं
हुसो णाम अणुणअंतो सअणघरे णिश्रोजिअ अह कहं
ािणग्ग अह्मि । विहस्य । कलअण्ठश्च विसुट्ठ, अणुट्ठिज्जदु
अवही ए महोवआरित्तणं जेण कहराश्च सम्बरएहिं चर-
सु णिपडिअ भअवदि तुह्मेहिं अणु ऊइदव्वा वामसीला
मअन्ति एत्ति वहुश्रो पत्थिदो पुढमसङ्केदिअ महुअरिआ
ढ़णिव्वट्ठिअ रमअन्तिआणे वच्छो भमरओ कल-
ाङ्कएण परिणइदो । सानुकम्पं । सा क्खु तवस्सिणी रमअ-
तआ एत्थ किंवि ण जाणइ केवलं जइ मे कलपिङ्गअस्स
रिणओ ता परिच्चइस्सं । जीविअं त्ति गाढ़किमणिच्चआ
ज्जाण केलिघरं गदुअ णिजढ़ा वट्टइ जं उण ण परि-
अइ जीविअं तत्थ महुअरिआ वअण वड्ढिआ कलअण्ठ
ाहपच्चासेव्व परमं कारणं । परितो विलोक्य । सानन्दं । अह्म
ावसाअ समुद्दओ णिहलिअ णीलज्जण पुञ्जमंसलम्बआर
ाव्भरो णिसीढारम्भो उच्छवव्वावार परिस्सन्तपसुत्तो
सअलो परिअणो । परिक्रम्य । अग्रतो दृष्ट्वा । एसो चउस्सा-
ेकदेसे गहिअ भअवदी वेसो कलअण्ठो णववल्लवेसघरं
मरअं महुअरिआए सह किस्सिअ अणु वट्टइ । पुनर्वि-
ाक्य । सहासं । हन्त जामादुओ कलपिङ्गओ वि इहव्व-
ट्ठइ ता अहं वि गदुअ वड्ढावेमि परिहासलअं । इति
ष्क्रान्ता । प्रवेशकः ।

ततः प्रविशति यथानिर्द्दिष्टाः कलकण्ठ भ्रमरक मधुकरिका कलपिङ्गका नवमालिका च ।

कलकण्ठः । साशंसं । जनान्तिके । नवमालिके ! कि मपि फलितो मन्दाकिन्याः सुगूढविवर्द्धितो नयसुरतरुर्भू योऽपि फलिष्यति वा नवा ।

अवधि विधुरानङ्गातङ्कव्यपोह महौषधीं
सुकृतसुलभां किंवा लप्स्ये प्रियां रमयन्तिकां ।

नवमालिका । जनान्तिके । महाभाअ ! सुरदरू क… श्व फलिस्सदि । अविअ गदाक्खु पुढ़मं एव्व लआघर मज्झ अणिजढाए रमअन्तिआए सविहं कालिन्दी ।। ता स… एव्व सव्वं सं जो अहुसुसदि एत्थ उण पेच्छीअदु दाव एस… क्खुणो परिहासो ।

कलपिङ्गकः । भगवति ! किमेषा वदति नवमालिका अपि चाटु चतुरस्य मद्गुरोः शम्बरकस्य प्रणयसरसैरनुन… वचनैर्जनित विस्रम्भागता शयनगृहमाकाशवाणी प्रभाव… लब्धा मल्लिका ।

कलकण्ठः । स्वगतम् । भूयोऽपि भगवती स्वरे… व्यवहरामि । प्रकाशम् । सत्यं चाटु चतुर एवास्माक… जामाता । कथयति नवमालिका तथा ब्रीड़ाशालिन्यपि मे वत्सा नवेऽपि वोढ़रि चिरसंस्तुत इव जातविस्रम्भ… शय्या गृहं प्रविष्टेति ।

नवमालिका । भयवदि ! किंबहुणा उवकिदं अज्जाए… आआसवाणीए जदो एव्वं णाम दक्खिणो जामादा लद्धो… अम्हेहिं ।

कलपिङ्गकः। आकाशवाणिप्रसङ्गेन सहर्षं अन्तः स्मयते।

मधुकरिका। अम्माणं उण भअवदीए उवक्किदं जाए कहराअपक्खे ठिदाए दक्खिणत्तण णअसीलसोभग्गादिहिं गुणं पि अहिसग्गं तस्स एदस्स जामादुणो अस्सो वि णिव्भच्छिअ हिरणापिअ सही रमअन्तिआ धम्मेहिं उण एत्तिअं समअं ण जाणिदो एव्वं विहो एसोत्ति।

कलपिङ्गकः। सानन्दम्। स्वगतम्। सत्यमाह मधुकरिका असंस्तवान्नावगता एव मद्गुणा मुग्धया रमयन्तिकया।

मदनपीड़ां नाटयति।

भ्रमरकः। सगूढ़स्मितम्। स्वगतम्। णड्डस्स मिच्छाविलाससालिणत्तणं। मूर्द्धानं नमयति।

कलपिङ्गकः। भगवति! लज्जावती न पश्यत्यपि मामियं दीर्घविशालेन लोचनेन। अतः कथय किमत्र प्रतिविधातव्यम्।

कलकण्ठः। उपायं किं न जानासि।

छन्दानुवृत्ति परताव्याजेनालाप सम्भेदः।

हठवैमुख्यमितो मे मुग्धा विस्रम्भणोपायाः।

कलपिङ्गः। सम्यगुपदिष्टं भगवत्या। तत् प्रथमं आलाप सम्भेदेनास्याः लज्जां क्षणशः कणशः खण्डयामि। भ्रमरकं प्रति। सानुनयम्। अयि सुवचने! संलप मां कलकण्ठधिक्कारिणा वचनेन।

भ्रमरकः। सक्रोधम्। जनान्तिकम्। महुअरिए! एदस्स णाहकलअण्ठ धिक्कार णिरदस्स कवोलेसु किं असणि-

वादनिटठुरं च विढ़ेमि। जह सव्वेवि दन्ता गुलुगुलुत्ति गलन्ति।

मधुकरिका। विहस्य। जनान्तिकम्। अदिकोवण क्खणमेत्तं वि कज्जं ण सहिज्जइ णं अणुपदं एव्व एब्बं करिस्सदि।

कलपिङ्गः। मधुकरिके! कस्मादियं आवद्धस्रूलताभङ्गमुत्कुपितेव ते प्रियसखी।

मधुकरिका। सच्चं उक्कुपिदेव्व।

कलपिङ्गः। सावेगम्। किमिति निर्निमित्तं कुप्यति।

मधुकरिका। एसा क्खु। अदिमाणंसिणी सुवअणासद्देण अक्कारिदो गोवतप्पलिअं संकेइ।

कलपिङ्गः। सस्मितम्। युज्यत एतत्।

मानाग्निवर्द्धन महौषध मेतदेव
स्त्रीणां सपत्नवनिताह्वय कीर्त्तनं यत्।
अव्याजनिर्भर भय प्रणतोत्तराणां
मन्ये विशेषत इदं कुलकन्यकानाम्॥

नवमालिका। णं जामादुणो एसेव्व सुवअणा सद्देण सम्बोहिआ सोहणं से वअणंति।

कलपिङ्गः। सत्यमाह नवमालिका ननु इयमेव सुवचना। निःश्वस्य। हन्त किमत्र प्रतिविधास्ये। भगवति! युष्माभिरियं प्रसादनीया ननु प्रागपि युष्माभिरेव निर्व्वर्त्तितोऽयमावयोः परिणयः।

कलपिङ्गः। जामातः नातः परमस्माकमधिकारः। पश्य।

यावद्यूनोः परिणय विधिः सम्प्रवर्त्तेत तावत् (१)
विघ्नच्छित्त्यै विहितधृतयो बान्धवो व्याप्रियेरन्।
पश्चान्मानातिशय सुलभप्रेमकोप प्रसादे
पारम्पर्य्यात् प्रभवत इमे केवलं पुष्पधन्वा॥

कालकण्ठः। सविषादं। तर्हि कथ्यतां को नामास्याः कोपप्रशमनोपायः

कल। विहस्य।

प्रणयकलहभार प्राप्तमौन ग्रहाणां (२)
अनुनय विधयोऽमी योषितां मानिनीनाम्।
शपथ चटुविशेषाः सन्त्यपि प्रेमकोप-
प्रशमन परमास्त्रं पादमूले प्रणामः॥

कालः। सहर्षम्। तदहं कालक्षेपासहः। परमास्त्रमेव प्रयोक्ष्ये। इति सखम्भ्रमं पादमूले प्रणमति।

भ्रमरकः। सहासम्। जनान्तिके। किं मञ्ज वामचरणेन ताड़इस्सामि हदासं।

मधुकरिका। जनान्तिके। मा एत्थ ताड़ेहि इदो अत्थि सप्पणावरं पीदव्वो जाव अम्हे उत्तरसिं कज्जे अवट्ठामो।

---

(१) मानातिशयेन सुलभाः प्रेमकोपप्रसादाः ययोस्ते तयोर्प्रभवतः प्रभू भवत इत्यर्थः।

(२) अमी शपथचटुविशेषाः। प्रणयकलहभारप्राप्तमौनग्रहाणां अतएव मानिनीनां योषितां अनुनयविधयः प्रसादनप्रकारभूताः सन्ति अपि तथापीत्यर्थः पादमूले प्रणामः प्रेमकोपप्रशमनपरमास्त्रं इति योजना।

नवमालिका। उट्ठेहि उट्ठेहि पसखा तुह पाणेसरी ।

कलपिङ्गः। सहर्षमुत्थाय। किं प्रसन्ना भगवति ! साधीयानयमुपाय उपदिष्टो युष्माभिः।

कल। जामातः प्रौढ़प्रायो निशीथः। तद्गच्छ सवधूकः शयनगृहं। आस्वाद्यतां अनेकप्रकारारब्धस्य पचेलिमं फलं। यावदस्माभिरपि क्वचिद्विश्रम्यते।

कलपिङ्गः। सानन्दं। झटित्युत्थाय भ्रमरकेण सह निष्क्रान्तः।

मधुकरिका। सहर्षं। महाभाअ ! सुट्ठु एसो वञ्चिओ हदासो। विहस्य। पिक्कमाहुपिक्कमाहुलगसीअ कामुएण साहामिएण फुलिङ्गो लद्धो। ता णिहुअं गच्छह्म उज्झाणघरं जस्सिं अविसाद वुत्तन्ताए एक्कव्व णिऊढ़ा वट्ठइ तवस्सिणि रमअन्तिआ।

नवमालिका। णहि णहि एक्कव्व णं कालिन्दी वि तहिं चिअ गआ ता अह्मेवि अविलम्बिअं गच्छह्म। उत्थाय परिक्रामति।

कलकण्ठः। मधुकरिके। अपि नावगतं रमयन्तिकया आत्मनेपथ्यधरस्य भ्रमरकस्य कलपिङ्गकस्य च दाम्पत्यं।

मधुकरिका। कहं णाम अवगच्छइ मुद्धआ जेण तं वि वञ्चिअ ऊण मए तत्तारिसपरिग्गहो पिअसहीकिओ भमरओ। ण वरं एत्तिअं जाणइ। मल्लिआ उण सम्भरएण परिणीदेव्व मंति कलपिङ्गअस्स समं समप्पिदुं भअवदी इह आअमिस्सदित्ति।

कलः। सानुकम्पं।

एषा मामिममुपगम्य नावगच्छेत्

काषायवस्त्रेण तिरोहिताङ्गवेशं।

नवमालिका। संस्कृतमाश्रित्य।

शोणाम्भोरुहवनरेणुदिग्धपक्षं

मारात्तावत वरटेव राजहंसं।

मधुकरिका। ता एदेण चउस्सालदुवारेण णिग्गदुम्र गच्छह्म। सर्वे निर्गमनं नाटयन्ति।

कलपिङ्गः। परितो विलोक्य। अहो महान् अयं निशीथः। तथाहि

एतद्‌व्योमवनीवराहवलयं विश्वैकवीरस्मर-

स्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकेशिकं (३)

चक्षुषाञ्जनवस्तुधूकसदृशां विश्लिष्टचक्राह्वयः

स्तोमान्तर्ज्जरधूमकेतनमहाधूम्या तमस्थीयते।

निर्वर्ण्य।

(४) उत्खातच्छिन्नसन्ध्यारुणकमलवनो व्योमकासारमध्ये

मन्ये मत्तो निशीथाह्वयवनमहिषो मंक्षु विक्षस्मिमंक्षुः

---

(३) श्यामा रात्रिः सैव वधूः तस्याः केशिकं केशसमूहः श्यामा स्यात् शारिवा निशा इत्यमरः। इह श्लोके मालागिरवयवं रूपकमलङ्कारः।

(४) उत्खातेति मत्तो दृप्तः निमज्जुः मङ्क्तुं रस्तु इच्छुः निशीथाह्वय वनमहिषः उत्खातच्छिन्नसन्ध्यारुणकमलवनः उत्खातं उन्मूलितं छिन्नं नाशितं सन्ध्यैव अरुणकमलवनं येन तथा भूतः सन् निशीथस्य सन्ध्योतरत्वेन नाशितसन्ध्यत्वमिति भावः। व्योमकासारमध्ये व्योम अम्बरमेव कासारः तस्य मध्ये मङ्क्षु क्षिप्रं अविक्षत् प्रविवेशेत्यर्थः। यथा कश्चित् प्रमत्तो वनमहिषो मज्जनेच्छुः सरसिजवनमाम्युन्मूलनच्छेदनादिना तच्छी कुर्वन् सरोमध्ये प्रविशति तद्वन्निशीथोऽपि नाशितसन्ध्या समयः सन् गगनान्त-

तत्कालोद्भिद्यमानैः सह तनु पृथुभिः तारकाबुद्बुदौघै-
स्तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ।

परिक्रामति ।

कलकण्ठः । अतिमनोहरोऽयं समयः । अत्र हि
सञ्चरन्ति मृगनाभिचर्चितामेचकाम्बरकृतावगुण्ठनाः
प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव ।

विहस्य ।

पश्य नवमालिके ! ।

जाताः प्रासादपाली कनकवलभिकान्यस्तमाणिक्यदीप-
च्छाया विच्छेद तुच्छीकृतविरलतमा ये निशीथान्धकाराः ।
तेऽमीस्फारी क्रियन्ते प्रतिविम्बितः कान्तसङ्केतधावद्-
वामभ्रूमुक्तनेत्रोत्पलतरलतरतारकामेचकिम्ना ।

मधुकरिका । एहि उज्जानमज्झं आअदह्य ।

नवमालिका । तिमिरातिशयं विभाव्य । संस्कृतमाश्रित्य ।

---

शलं व्याप्नोतीति भावः इति मन्ये जानामीत्युत्प्रेक्षा तत्र विशेषमाह ।
तस्मादेव निशीथ संज्ञक वनमहिष कृतव्योम सरोन्तराल प्रवेशादेव
तत्कालोद्भिद्यमानैः तत्काले पूर्वोदितप्रवेशसमये उद्भिद्यमानैः बहिः-
प्रकाशमानैः तनु पृथुभिः अणु महद्भिः तारकाणामेव बुद्बुदानां ओघैः
वृन्दैः सह ओघो वृन्देऽम्भसां रये इत्यभिधानं । भीषणः ध्वान्तपङ्कः
ध्वान्तमेव पङ्कः कलुषितभुवनं कलुषितं दृष्टिप्रतिरोधकत्वेन आकुलीकृतं
नैर्मल्य प्रतिबन्धकत्वे आविलीकृतश्च भुवनं जगत् उदकञ्च यस्मिन् कर्मणि
तद्यथा भवति तथा भुवनं विष्टपे लोके सलिलेऽपि वियत्यपि इति विश्वः
उज्जिहीते उद्गच्छतीत्यर्थः । तस्मादेवेति । एवकारेण निशीथाख्यवन-
महिषकर्द्दकव्योमकासारमध्यप्रवेशाभावे कथमीदृक् ध्वान्तपङ्कोद्गम इति
भावो लभ्यते ।

अनुमितघ्राणतुण्डकुसुमसौरभ्यभरिते
तमःखण्डे पिण्डीकृतबहलकालायसघने ।
वृतामष्यास्माकं कथमपि पुरोन्यस्तचरणं
निमिषेऽप्युन्मेषे नहि नहि विशेषो नयनयोः ॥ (५)

कलकण्ठः । परितो विलोक्य । सखेदं । हन्त

यत्र यत्र घनचन्द्रमांसले धारयामि नयनं तमस्यपि ।
दृश्यते विमलचन्द्रसुन्दरं तत्र तत्र रमयन्तिकामुखम् ॥

मधुकरिका । एदं पुरो रअणबद्धकुट्टिमं तं लदाघरं ।

कलकण्ठः । विलोक्य । सविस्मयं । मधुकरिके !

मणिभिः प्रभा प्रतिहतप्रसरं पश्याभितोऽधुना भवनं ।
परिवेषितिमिरमण्डलमयोमयं भाति चालचक्रमिव ॥

मधुकरिका । सबाष्पं । एसा कुट्टिमेक्कदेसे परिसुण्ण-वअणा उपविसइ कालिन्दीए समं पिअसही ।

कलकण्ठः । सदयं । इयं हि ।

निःश्वासानलविदग्धदन्तवसना नेत्राम्बुसिक्तस्तनी
हस्तन्यस्तकपोलदीनवदना हारैकभूषावती ।
बिभ्राणा सपदेन तुङ्गजघना विस्रंसिनीं वेणिकां
आस्ते स्थण्डिल एव पाण्डुमधुरच्छामालसैरङ्गकैः ॥

नवमालिका । सा पिअसही कठोरसोअमसु चिन्ता-पज्जाउला लक्खिज्जइ । ता मए भणिदं कालिन्दीए

---

(५) पुरोन्यस्तचरणं यथा तथा कथमपि अतिप्रयासेन यतां गच्छतां इत्यर्थः पिण्डीकृतबहलकालायसवत् घने सान्द्रे इत्यर्थः तुल्यवेधे इति शेषः ॥

(६) कुप्यतु प्रलम्ब परिपन्थिहलापपात
बुध्यतु कलिन्दतनयाकरी गभीरे
भुग्न भ्रुवो नयनकान्ति नदीप्रवाहे
मज्जन्नगाधितरतरं मकराचितानि ॥

कालिन्दी । तदो तदो ।

रमयन्ति । तदोअ सो धवलचामरकलापं तरिअ उप्पडन्त मउलिद मण्डल पक्खपालि परिक्खित्त कण्णार विन्दसुन्दरं वअणं सविब्भमं ईसि उत्ताणं कदुअ विहडन्त सहस्स पत्त कहरेहिं सविलाससुव्वेल्लिअ लमया तोरण मण्डणेहिं पेम्म मद मुउलन्त पिरन्तेहिं णअणेहिं मं सआ-अअंतो एव्व करकमला अट्ठिअ खलि णावद्ठंभमन्दमन्दो-लिअ तुरङ्गमगई णिरिणा तं रच्छं अदिवाहिदवन्दो ।

मलकण्ठः । सत्यमुक्तं मधुरवाण्या चिरेणातिवाहि-तवानिति । मधुकरिके ! ननु त्वया विज्ञायत एवैतत् ।

द्राघीयसीभिरखिलाङ्ग इहार्पिताभि-
रस्याः कटाक्ष मय पाश परम्पराभिः ।
पश्चाद्विकृष्ट इव तत्र पदेपदेऽहं
कष्टादलङ्घय मनङ्ग इतः प्रतोलीं ॥

मधुकरिके ! कथं द्वाविमौ स्तः । ततः प्रभृति पश्य ।(७)

---

(६) प्रलम्ब परिपन्थी बलराम इत्यर्थः ।

(७) मधुकरिके । कथं द्वाविमौ स्तः । ततःप्रभृति पश्य इत्यत्र टीका । ततः प्रभृति रथ्यालङ्घनादारभ्य इमौ पश्यमानौ द्वौ कथं कः ह्नित्यविमिटौ कथं वर्त्तते इत्यर्थः ।

रव णिट्ठुर ममरवम चडि भमबर पड्ब बहुप बद्धुब णिम्मन्तर जीविम णिरोहणोच्छासविहिद णिउम्म सव्वे किच बाउढ़ पचासा धारिम सरीरा तह तह सबार चमण परिमण तुरिम णिव्वट्टिम विविह जीमचीवम्माव हुउणिम तस्स अरा णिप्फलं पाणिमि जंठणा सोमसरच्छि तक्कालुव्भिज्जन्तमम रीस दुकपसप्पच्छ कुम्भतड संघ संघ-डच झड़झड़ा भन्त दन्त दम्भोलि सिहरसस्स दन्दावससुव सुण्डादण्ड बलपादो रक्खिदम्हि। तं उण तुम्हाणं वि पच्च-क्खं एव्व सहि ण आणासि किं तस्सिं समए एदस्स वि संबसस्स बाराणसी पहिमन्तणं जस्स मं भमबदी साअं पवट्टइ। सानुकम्पं।

कालिन्दि! कहं णाम मारुएक्क पराम्मण जीविमा मल्लिमा भमबदीए सम्बरम्मस्स दाविदा। जा तस्स दुट्ठ पहिम्मस्स मुहादो, तारिसिं पवुत्तिं सुणिअ हा णाह मारुएत्ति कलुण कलुणं बाहरन्दीदुहण ताड़िएव वल्लिं मुच्छिमा भविम तक्काल सण्णिहिदेण पुसचन्द सुन्दरेण तेण महापुरुसेण परिरद्धेव्व पड़िबुडाम अहवा चिट्ठदु एदं पुणोवि पत्थुदं सुणादु पिअसही। अह देव दुद्दम दंसणेव णिमवरिसेण विम पावम्मो पज्जलिम्मो मह समणा मंतो संकप्पेसु अ भिणजण णीलं मं सलेम तिमिरे बलिम परि-मणा लम्मा घरेसु एक्कीं एव्व पड़ि वाल मन्तीं मं सोवि-वेमन्तर तिरोहिदो अवणीद वरिमणो हरिसा सुराम फुरिदेहिं कणजाइ जह्वालेहिं (८) णेत्तेहिं णिवन्दि निम

(८) कमजाइ जह्वाव हं। कर्णजाइ जह्वाघात्वा कर्णजाति

भ्रमर। णाह! जो णाम मणाणुट्ठिअ कज्जो णिवट्टइ
हस्स परिअणेसु।

कल। तत् कथय किमत्र क्रिया इति।

भ्रम। तदो सव्वाघरं गदुअ भूयोवि कलह पाउणा
णावुढ़ो पुणो पुणो चलणा दासस्स तस्स तक्खणा सुमरिद
विविहा वराह समुज्झिअ रोस निट्ठुर चिविड़ ताड़णा
णिव्भिस्स सव्वङ्गं पुढमं एव्व महुमरिआए मञ्चवेरस्स
णिक्खित्तं मसि भण्डं वेक्खुण अहिसित्त बन्धोम्हि किं
बहुणा तह णिक्कासिदो सो हदासो। जह णं विसलिन्ति
लोआ परिहरन्ति।

सर्व्वाः। विहस्य। असहा वि तं विसलिन्ति परिहरन्दि
एव्व।

भ्रमरकः। अह अड्ढ मुक्क णिहाणं वेडअ वरिस
वट्टाणं पवुट्ठे कोलाहले अहंवि पसमिअपईवो तिरो
विआदुअ तक्खणं तमालणिहं संवरअं किं दाणिं ति
णिन्दिअ कवे जक्ति आअदम्हि।

कल। साधु भ्रमरक! साधु।

यदुयुयुजः शत्रूनिकारेण यथाप्य मात एवागतोऽस्मि।

मधुकरिका। महाभाअ! इदोवरं अम्हाणं अवे सणं
सव्वविसुसदि ता एदिणा उववण दुवारेण णिग्गदुअ मल्लिआ
समीवं एव्व गच्छम्ह।

कल। तद्गमय मार्गं।

मधु। इदो इदो। सर्वे निर्गमं नाटयन्ति।

कल। सर्वसुखमनुभूय।

(१०) एष क्रीड़ान्त ताम्यत् कुसुमपुर वधूवक्त्र सौरभ्य बन्धुः
मुग्धं निद्राजड़ानां रसितमनुसरो द्राघयन् सारसानां।
आवात्यङ्गानुकूलश्चकित विचकिलश्रेणि गन्धानु धाव-
ल्लोलम्बोद्घुष्यमाण स्मरजय विरुदाडम्बरो मातरिश्वा।

इति मल्लिकामारुते सप्तमोऽङ्कः।

---

(१०)प्रभातं वर्णयति एष इति। क्रीड़ान्तताम्यत्कुसुमपुर वधूवक्त्र सौरभ्य-बन्धुः मित्रं सहाय इति यावत् यस्य स तथोक्तः। बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे इति मेदिनी। उपवनत्ववर्त्ति कुसुमपुर योषिद्रतान्त जायमान श्रमविशेषाऽनुभवभूत फणिविषय फूत्कार बहल सुगन्धि मुखमन्दानिल संमिलित इति भावः। अत्र क्रीड़ान्त ताम्य-दिति विशेषणेन वर्त्तमान रतान्त क्लान्ति वैशिष्ट्य प्रतिपादनात् सर्वदाव रतोत्सुकत्वावगतेः सर्वासामपि कुसुमपुर स्त्रीणां पद्मिनीत्वं द्योत्यते तथा चोक्तं। रमयति रमणीयां पद्मिनीं सर्वयामे इति। अनुसरः प्रति कासारं निद्रया व्यवस्थित निद्रयेत्यर्थः जड़ानां घूर्णतां सारसानां पक्षि विशेषाणां रसितं द्राघयन् दीर्घीकुर्वन् चकितानां विचकिलश्रेणीनां मल्लीविशेषराजीनां गन्धैः गन्धाय वा अनुधावन्तो ये लोलम्बा भ्रमराः तैः उद्घुष्यमाणः स्मरजय विरुदाडम्बरः यस्मिन् स तथोक्तः। मात-रिश्वा गन्धवाहः अङ्गानुकूलः आवाति मन्द मन्दं चरतीत्यर्थः।

इति मल्लिकामारुतव्याख्याने परिमलाख्याने सप्तमोऽङ्कः।

## अथ अष्टमोऽङ्कः ।

ततः प्रविशति मन्दाकिनी माकन्दश्च ।

मन्दा । ततस्ततः ।

माकन्दः । ततश्च तं तमालविटपालम्बं अधोमुखं बद्धा तिरो भूयागतोऽस्मि ।

मन्दा (विहस्य) । वत्स ! समुचितमनुष्ठितं । यतः ।

अद्य प्रसीदति मनो मम मारुतेन
मल्लिकाकारमभिमरुमौपितेन ।
यस्यानुरूपमिदमापयमेतदासि
साक्षोटिनो चरणदुर्ललितस्य मर्त्तो: ॥ (१)

ततस्ततः ।

माकन्दः । अथागच्छन्नेव रमयन्तिका सहायं नव-मल्लिकादिभि: सहोपवनाभिमुखं निर्गच्छन्तं कलयाञ्च-

---

(१) अद्येति । अद्य त्वदीय समुचितानुष्ठान अवधानन्तर मम मनः कर्त्तृ प्रसीदति चिन्तादिविरहेण प्रसन्नं भवति । यत् यस्मात् कारणात् ईर्षितेन परत्वेन अभिलषितेन मारुतेन मल्लिकाकर कर्म अभिमुखं यथाहयमित्यर्थः ।

यश्च यस्माच्च । एतस्याः मल्लिकायाः आप्तौ विषये सहूटिमो भावः । साक्षोटिनं कपटिनं तस्य आचरणेन दुर्ललितस्य धूर्त्तस्य मर्त्तोः ग्रन्वरकस्य अनुरूपं अपराधस्यैवे दण्डन न्यायेन क्रत प्रतिक्रत न्यायेन च सदृशं इदं निर्वर्त्तित बद्धपतनं तमालविटपे अधोमुख बन्धन-रूपम् । प्रतिकूटमित्यर्थः । आपयं अवभेयं तस्मात् मनः प्रसीदतीति पूर्वेण सम्बन्धः ।

मालोक्य भगवत्याः प्रथम प्रिया वेदकः स्यामिति झटित्या-
गत एव। न पुनस्तेषां आत्मानं प्रकाशित वानस्मि।

मन्दा। हर्षातिशयं नाटयन्ती। वत्स! अवाङ् मनस-
गोचरोऽयं मनोरथा वाप्ति जन्मा महानन्दः।

माक। भगवति! युज्यत एतत्।

न यथाब्दयापि नाक लब्धया नच वित्तेन तथा सुधारसेन।
प्रसद्यमजते मनः स्वयं परिपूर्णेन यथा मनोरथेन॥

परितो दृष्ट्वा। क्वाथ मल्लिकामारुतौ।

मन्दा। मारुतः प्रागुपवनान्निर्गतः स्वपरिजनान्वेषण-
शङ्कया स्कन्धावारमेव गतः सारसिकयाद्य गूढ़मानीतः
समीपवर्त्तिनि लताभवने वर्त्तते। मल्लिका तु मयाना-
नीता। अद्य सारसिकयैव तत्समीपं नीयमाना इतो
निर्गता। सानुकम्पं।

नि:शङ्कमुत्कलिकया पुरतो विकृष्टा (२)
निर्व्याजया गुरुत्रपत्रपया च पश्चात्।
सा पुष्प केतुशर पीड़ित कोमलाङ्गी
बाला कथञ्चिदुपकण्ठमगाद्दिवोढ़ुः॥

मकरन्द। हन्त! तिरयत्येव भीतिं मङ्गनानां प्रिय-
समागमानुरागः। तथाहि।

या मन्दिरे परिजनेन्दुमुखीवराज
माङ्गल्यदीप शतमण्डित पार्श्वदेशा।

---

(२) उत्कलिकया उत्कण्ठेनार्थः। अथवा उत्कलिका चोत्कलिका
रतिबरवारवक इति हलायुधः।

चंक्रम्यते किमपि सेय मिहान्धकारे
याता स्वयं रमण सन्निधि मवसन्ती ॥ (३)

माक । सहर्षं । तदनुमन्यतां भगवती मां हिमाचल प्रस्थ प्रस्थानाय । यावदमुनोदन्तेन विद्याधरामात्य-मानन्दयामि ।

मन्दा । स्मृत्वा । सातङ्कं ससम्भ्रमञ्च । हन्त विस्मृतो मया तत्तदुपाय व्यापृत चित्तया मूर्च्छाहरस्य वत्सायाः सीमन्तमणे राक्षस व्यतिकरे प्रश्नः । सनिर्वेदं । (४) धिक् कष्टमिह महान् प्रमादः । क इदानीं मन्विष्यामि । इत्युत्तिष्ठति कर्णं दत्त्वा । अयमसौ भगवत्याः प्रथमः किमपि व्याहरति । आकाशे लक्ष्यं बद्धा । भद्र ! किं ब्रूषे ? । स खलु मणि स्तस्यां निशि अन्येन खड्गजिह्वनाम्ना रक्षसा गृहीतोऽनुद्रवद्भिरप्यस्माभिर्न समासादित इति । विषादं नाटयति ।

पुनराकाशे । भद्र ! भूयः किमात्थ । अथ द्रविडेषु काञ्चीपुर सविधेन धावं स्तत् कालोपस्थितेन देव्याः कामाख्याः किङ्करेण निहतः स यातुधानः आच्छिन्नश्च तेनैव समणिरिति । सोच्छ्वासं । विमृश्य । अयमवसरो मम योग विद्या प्रकटनस्य । यावत् सम्भावित भावि मूर्च्छागमां मल्लिकामेव काञ्ची पुरं नयामि । इति निष्क्रान्ता ।

ततः प्रविशति लतामूलस्थो मारुतः ।

---

(३) अवसन्ती निर्भया सतीत्यर्थः ।
(४) सनिर्वेदं । दुःखादिजनित निष्फलत्वधिया स्वावमाननमित्यर्थः ।

मारुतः। सहर्षं। अवश्य मद्यानेष्यत्येव मल्लिकां सारसिका। औत्सुक्यातिशयं नाटयन्।

नीतास्ते दयितापि संशयकृतः कल्पोपमा वासरा
प्राप्ता च प्रथमोर्जितेन तपसा प्राणेश्वरी मल्लिका। (५)
नेदीयांस मवैमि सम्प्रति तया सङ्गं तथाप्यन्तरे
यः कश्चित् क्षणमस्ति सोऽपि विरहो हा हन्त मे दुस्तरः॥

विमृश्य। अथवा चेत एव दुस्तरं मन्यते यावदेत-दाश्वासयामि।

अये चेतो धैर्य्यं धर विधुरतां मास्म भजथा
ननु प्रत्यासन्नो भवति दयिता सङ्गम महः। (६)
तथानामोत्तीर्णे महति विरहे पञ्चषत्रुटि
व्यवच्छिन्नं (७) कालं किमिति युगदीर्घं कलय मे॥

निःश्वस्य। हन्त उत्तरोत्तरमुत्कृष्यमाणे मान्मथे प्राचण्ड्ये किं करोतु तपस्वि (८) चेतः। तथाहि।

---

(५) प्रथमार्जितेन प्राक् सम्पादितेन तपसा दुष्प्राप प्राप्तिसाधनभूतेन कर्मविशेषणेनेत्यर्थः। उक्तञ्च मनुना। यद्दुष्करं दुरापञ्च यद्दुर्गं यच्च दुस्तरं तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रममिति।

(६) दयिता सङ्गम महः दयिता सङ्गमोत्सवः। मह उद्धव उत्सव इत्यमरः।

पञ्चषत्रुटि व्यवच्छिन्नं लघु रोच्चारकालस्त्रुटिः पञ्चवा षड्वा पञ्चषाः बहुव्रीहौ संख्येये डज बहुगणात् इति डच् डिति चेति टिलोपः। ताश्च ताः त्रुटयः काललवाश्च ताभिर्व्यवच्छिन्नं तत्परिमितिं यावत्। वाद्ये काललवे त्रुटिरिति नानार्थ रत्नमाला।

(८) तपस्वि करुणास्पदं शोचनीयमिति यावत्। करुणार्प्रतिपादने तपस्वी चेति रुद्रः।

आरभ्य तस्याः प्रथमावलोकात्
अस्त्राणि यावन्त्य मुचन्मनोभूः।
तावन्ति तेभ्योऽप्यधिकानि चाद्य
प्रयुङ्क्त येक क्षणमात्र एव ॥

परितो विलोक्य। हन्त सूचिभेद्यैः रन्धकारैरभिव्याप्त-
मेक तमालोद्यान तुल्यं भुवनं। सकरुणं। कथमपि दूरा-
दपयाश्रमादस्मिन् समये समेष्यति कोमलाङ्गी।

दूयेते शिव शिव यौ सरोजताम्रौ
सैरन्ध्री करतलदत्त लाक्षयापि।
पादौ तौ तिमिरविसंष्ठुले स्थलेऽस्मिन्
सञ्चारं चकित दृशः कथं सहेते ॥

अथवा नाति शोचनीय मेतत्।

चरणौ नयने तमः प्रकाशो वनिता नाम सहायता वयस्या।
अपिच प्रिय वल्लभाभिसारे भवन प्राङ्गण कुट्टिमः कदध्वा ॥(८)

नभोविलोक्य ! अये ! उत्कण्ठिते वेयं मल्लिकायाः सरणिं
प्रकाशयन्ती दीपिकेव विद्रुम भङ्ग पाटला ज्योत्स्नावल्ली

---

(८) चरणाविति। वनितानां प्रियवल्लभाभिसारे विषये चरणौ नयने नयनवत् मार्गप्रदर्शके इत्यर्थः। तमः प्रकाशः प्रकाशवत् गमन-प्रतिबन्ध प्रतिपन्थि इत्यर्थः। असहायता वयस्या सखी सखीवदभय-प्रदानपूर्वकं नायक सङ्गम सम्पादयित्रीत्यर्थः। अपि च कदध्वा कापथः कण्टककानन क्षुद्रजीवाद्यावृतमार्ग इति यावत्। भवनप्राङ्गण-कुट्टिमः वेश्मप्राङ्गण निवद्ध भूमिः। कुट्टिमोऽस्त्री निवद्धा भूरित्यमरः। भवन प्राङ्गण कुट्टिमवदनायास गमनार्ह इति यावत्। अत्र चरणौ नयने इत्यादिषु सर्वत्र व्यस्तरूपकम्।

निर्वर्ण्य ।

नवकुङ्कुमचर्चिका रजन्याः गगना शोकतरोः प्रवाल पङ्क्तिः
मणिकुन्तलता स्मरस्य मन्ये शशिनः प्राथमिकी मयूखलेखा

(१०) प्राचीं विलोक्य सकौतुकं ।

अयमुदयति चन्द्रो वारिधेरम्बुगर्भा-
दमृतकणकरालैरंशुभि र्दीप्यमानः ।
जलधि(भुजग)शयनवक्षो हर्म्यदेशे ललन्त्या
वदनमिव यदृच्छोत्तानितं विश्वमातुः ॥ (११)

अपिच । उज्जृम्भते कुमुदिनी सुकृतं मृगाङ्को
विष्वग्विकीर्णपरिपाटल रश्मिदण्डः ।

---

(१०) नवकुङ्कुमेति । शशिनः प्राथमिकी मयूखलेखा रजन्याः रजन्याख्यस्त्रियः नवकुङ्कुमचर्चिका गगनस्थैरा शोकतरोः प्रवालपङ्क्तिः स्मरस्य मणिकुन्तलता मन्मथोपयोगी मणिमय कुन्ताख्यायुधविशेषः इत्यर्थः । इति मन्ये इत्यन्वयः । इह मालानिरवयव रूपकमलङ्कारः । अत्र अव्याख्यातेषु एतद्ग्रामवनीवराह वलयं विश्वैकवीर स्मरस्कन्धावार मदान्ध विस्फुरकुलं श्यामावधूं कैशिकमित्यादिषु स्थलेष्वपि अयमेवा-लङ्कारो बोध्यः ।

(११) अयमिति । अमृतकणकरालैरंशुभिर्दीप्यमानः अयं चन्द्रः भुजग शयन वक्ष एव हर्म्यः तस्य देशे ललन्त्याः विलसन्त्याः विश्वमातुः लक्ष्म्याः यदृच्छया उत्तानितं उन्नमितं वदनं सुखमिव इत्युत्प्रेक्षा वारिधेः अम्बुगर्भात् उदयति । भुजगशयनेत्यत्र जलधि शय-नेति पाठे वारिधि वारिगर्भोदये साभिप्रायत्वात् विशेष एव । उत्प्रेक्षा लक्षणन्तु । यत्रान्यधर्मसम्बन्धात् अन्यत्वेनोपतर्कितम् । प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते इति ।

उत्प्लुत विद्रुमकुलो जलधेस्तरङ्गा-
दुत्क्षिप्यमाण इव कश्चन राजकम्बुः॥ (१२)

निर्वर्ण्य।

हन्त गलित एवोदय रागः। साकूतं।

अनुसर्त्तु मना मनाग्मनोज्ञं किमपि श्वेतत एव शीतधामा।
वदनं निखिलोपमान दूरं मदनान्तकविपाण्डु मल्लिकायाः(१३)

निःश्वस्य। यावदेनं दुर्लभार्थं प्रार्थन दुर्ललितं किञ्चिदु-
पब्रवीमि।

अभिलषसि यदीन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कं।
सुविमलमथ बिम्बं पारिजातस्य गन्धैः।
सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व॥ (१४)

---

(१२) उत्प्लुतानि। उपरि विकीर्य्यमाणानि विद्रुमकुलानि येन च तथोक्तः। जलधेस्तरङ्गात् उत्क्षिप्यमाणः कश्चनः राजकम्बुः शङ्खोत्तम इव इत्युत्प्रेक्षा उत्प्लुतपदस्य वर्त्तमानार्थकत्वन्तु मति बुद्धि-पूजार्थेभ्यश्चेति च शब्दस्य अनुक्त समुच्चयार्थकत्वात् अतएवाह वृत्ति-कारः। शप्तं यथितेत्येवमादयो वर्त्तमाने द्रष्टव्याः इति।

(१३) मनोज्ञं वदनं अनुसर्त्तुं मना किमपि अनिर्वचनीयतया श्वेतते शुक्लो भवतीत्यर्थः। मल्लिकावदनमनुसर्त्तुं मना इत्युक्त्या साकूतत्वं बोध्यम्।

(१४) अभिलषसीति। हे इन्दो! मृगाक्ष्याः वक्त्रलक्ष्मीं अभि-लषसि यदि पुनरपि अद्यैवाब्धौ स्थितत्वात् पुनरपीति पदं अब्धौ सकृत् मज्ज अवगाहस्व। अङ्कं कलङ्कं संक्षालय प्रक्षालय अथ सङ्क्षालना-नन्तरं सुविमलं बिम्बं कर्म पारिजातस्य पारिजातकुसुमस्य गन्धैः

अथवाद्यैवागताया स्तस्याः सुरभि सुन्दरं वदनं प्रदर्श्य त्वां संवादयामि । (१५)

कर्णं दत्त्वा । सहर्षं । हन्त आगतैव प्रेयसी ।

इदमिदमलसाया श्रूयते मञ्जुतारं
जघनभरगताया भं क्वणितं मेखलायाः ।

पुनः कर्णं दत्त्वा सविषादं ।

नहि नहि विधु बिम्बे बध्नतां स्त्रीय बुद्धिं
सरसि सरसि सोऽयं निस्वनो हंस यूनाम् ॥ (१६)

नेपथ्ये । इदो इदो जोण्हिआविदेण मग्गेण मन्दं एदु पिअसही ।

मारुतः । आकर्ण्य । सानन्दं । सत्यमागतैव मल्लिका ।

---

रामेदैः सुरभयः (कुवलयानन्दे विषमालङ्कारोदाहरणस्थले पारिजात प्रसूनैरिति पाठो दृश्यते) नो चेत् मज्जन कलङ्कत्वेन बिम्बसुरभीकरणाभावे इत्यर्थः । त्वं कलङ्कित्व निर्गन्धत्व दोषविशिष्ट इति भावः । क्व तस्याः सुखं सुरभि सुन्दरमिति भावः । क्व परस्परमननुरूपमित्यर्थः । तदा दुर्लभमेव त्वत् प्रार्थनं स्यादिति भावः । विषमालङ्कारः विषमं वर्ण्यते यत्र घटनाननुरूपयोरिति लक्षणात् ।

(१५) विमलत्व सुरभित्वयोरुभयोरपि गुणयोः सम्भव एव तद्वक्त्रस्यैः प्राप्येति प्रागुपन्यस्तेऽर्थे संशय निराकरणायाह अथवाद्यैवागताया इति संवादयामि अङ्गीकारयामीत्यर्थः ।

(१६) नहि नहि मेखला भं क्वणितं नेति भावः । किं तर्हीत्यत आह । सोऽयं श्रूयमाणः विधुबिम्बे स्त्रीयः स्व यूथ्यो इव इति बुद्धिं बध्नतां सरसि सरसि प्रतिसरः स्थितानामिति शेषः । हंसयूनां निस्वनः इति सम्बन्धः ।

विहस्य। अहो विशिष्टवस्त्वभिलाषो मञ्जूनाम्। एतेहि।

अहत: शशाङ्ककिरणान् पिपासव: सुरभिलां मुख-ज्योत्स्नां चंचूर्य्यन्ते (१८) परितश्चकोरपोताश्चकोराक्षीं।

पुनर्निर्वर्ण्य। सस्मितं। न केवलं चकोर एव।

स्वयमयमपि चन्द्र: प्रागुपालब्ध कान्ति:
पिपठिषु रभिरामां सुभ्रुवो वक्त्र लक्ष्मीम्।
अविरल भवदच्छ स्वेदलेशानुकीर्णं
प्रतिफल नमिषेण प्राप्तवान् गण्डमूलम्॥ (१९)

यावदहं प्रत्युद्गच्छामि। अथवा त्रैव स्थित: सुललितमस्या आगमनं निर्वर्णयामि।

तत: प्रविशति यथोद्दिष्टा मल्लिका सारसिका च।

मल्लिका। स्वगतं। अज्ज पुढमं अज्ज उत्तं अहि सरन्ती वरवसह्मि असज्झेहिं लज्जाकोलाहलेहिं।

---

चर्वेत्यादि बहुप्रकारोल्लेखात् उल्लेखालङ्कार:। एकेन बहुधोल्लेखे-ऽप्यसौ विषयभेदत: इति लक्षणात्।

(१८) चञ्चूर्यन्ते पुन: पुनरतिशयेन वा सञ्चरन्तीत्यर्थ:। चर गति भक्षणयोरिति धातोरेकाचो हलादेरिति यङन्तात् सनाद्यन्ता इति धातुत्वाल्लट् ङिदन्तत्वात् अनुदात्त ङित इत्यात्मनेपदं चर फलो-रित्यभ्यासतो नुक्। उत्परस्यात इति अभ्यासात् परस्यात उत् हलि चेति दीर्घ:।

(१९) अविरलं यथा तथा भवद्भि: उद्भवद्भि: स्वेदलेशै: अनुकीर्णं गण्डमूलं वक्त्र प्रतिफलनमिषेण प्राप्तवान् इति योजना कैतवापह्नुति-रलङ्कार:। कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते: पदैरिति लक्षणात्।

सार। हद्दी हद्दी। इति पठिकान्ततः।

माधवः। साभिलाषं। इयं खलु।

उत्तुङ्गस्तनभर तान्त तान्त मध्यं
विश्लिष्यद्घनकच वान्त वान्त सूनम्।
वक्त्राब्ज भ्रमदलि भीत भीत नेत्रं
मुग्धाक्षी मम धुरि मन्द मन्द मेति॥

मल्लिका। सहि सारसिए! कहिं ण अज्जउत्तो वट्टइ। उक्कण्ठइ मह चन्द दंसणप्पिआ दिट्ठी अज्जउत्त मुहार-विन्दं दट्ठुम्।

सार। सानन्दं।

अद्य हि सफलं यौवनमद्यहि देवः स्मरः प्रसन्नो मे।
अभिधेयोऽस्मि यदस्या रमणीयस्वार्यपुत्रशब्दस्य॥

सार। सहि! समीवं विअ वट्टइ आअच्छेहि पञ्च-वाणि पआणि।

मल्लिका। स्वगतम्। अण्णहं अज्जउत्त दंसणुस्सिआए मह पञ्चपअ परिमिदोवि दुरं धो एव्व पदेसो। पञ्चपानि पदानि गत्वा परितो विलोक्य सविषादं। सहि सारसिए! मिच्छा कहेसि एत्थ वि ण दीसइ अज्जउत्तो।

सार। विहस्य। सहि मल्लिए! सच्चं तुह विआल तुङ्गेण सिअणभरेण किलन्ताए णव पल्लव कोमला चरणा तीमा तहवि पत्थेमि। पुणोवि किञ्चिअ अग्गदो आअच्छ। पुष्पा दर्शयन्ती। एत्थ पेक्ख णादि दुर वट्टिणि लदा मूले सण्णिहिदेण होदव्वं।

मल्लिका । साकूतं । जदि एव्वं ता सघिग्घं सघिग्घं गच्छम्ह । अविलम्बाद्दिव्व गदुअ परिरक्खम्ह अज्जउत्तं । इति पदान्तरं गत्वा सलज्जं तिष्ठति ।

मारुतः । झटित्युपसृत्य ।

सोढुमलमस्मि नाहं सुन्दरि ! मन्दागमा द्विलम्बं ते ।
पञ्चशरास्त्र हतं मां सञ्जीवय चारुगात्रि ! परिरम्भैः ॥

इति मल्लिकाया हस्तं गृह्णीतुमिच्छति ।

मल्लिका । दृष्ट्वा सानन्दं । स्वगतं । अम्महे सयं एव्व आअओ अज्जउत्तो । सत्रासव्यलज्जमपक्रामति ।

सारं । सहि ! एत्तिअं समअं तह तह साम उव्वुअा भविअ एहिं उण हत्यग्गहणे वि जणिअ सम्भमा धावसि ।

मल्लिका । अदत्तोत्तरैव सलज्जं तिष्ठति ।

मारुतः । सस्पृहं । स्वगतं ।

अस्याः स्थितं किमपि सम्प्रति लोभनीयं
मन्न भ्रुवो नमित मुग्धमुखारविन्दम् ।
मन्दाच मन्थर विलोल विलोचनाञ्च
च्छायाञ्चलच्छुरणशाद्वलितस्तनायाः ॥

विमृश्य । भवत्वेवं तावत् । प्रकाशं । प्रिये ! मा तावत् करावलम्बः । एतत् पुनरनु मन्तव्यं मे । (२०)

---

(२०) अथात्र सर्वकामिजनसाधारणं (मदनवचनदक्षो कामिनी मानभेत्ता) इत्यादि वचनैः रतिमन्त्रविदग्धत्व लक्षणं द्विप्रकारक समोगाङ्गतया आवश्यकत्वेन कामवेदविहितं आत्मविषयकदक्ष वैशिष्ट्य षड्विधोपायात्मकं नायक कर्तृक चाटुवचन प्रकारम् । तथा नायिका

यदिह मगधयित्वा दुर्व्वहं श्रोणिभारं
मदभिसरण लोभात् प्रस्थितं पद्मताक्षम् ।
अयमहमभि वाञ्छाम्यग्रजेग्रैव पांसुं
सुमुखि ! पदतलन्ते चूडितुं चुम्बितुम् ॥

मल्लिका । सवाध्वसकम्पं । स्वगतं । अम्महे ण आयामि
आए पडिवत्तुम्मि ।

माध । मल्लिकां निर्वर्ण्य । सानुकम्पं । सारसिके ! न विर-
त्यद्यापि गमन जनितः परिश्रमो मालतीदल सुकुमा-
राया मल्लिकायाः । पश्य ।

मो श्राम्यन्ति स्खलित मरुतः सौरभोद्भ्रान्त भृङ्गा
मुग्धी मध्यस्तनतटभरोत् पीडितत्रुटत्रतीव ।
ऊर्वोस्थावोंरुपरि जघनाक्रान्तयो रस्ति खेदो
भूयो भूयो वदनकमले भूयते घर्म्मलेशैः ॥ (२१)

सार । ता एत्थ एव्व घणसार क्खोद धवल सीअल
याच्छा वाद सुन्दरे कुसुम धूलि सिमदिले सिलाअले
उविसदु महाभाओ जेण पिअसही वि उववसदि ।

माधव । उपविश्यति ।

सार । सहि ! तुमं वि उवविस ।

---

र्द्धं अनुज्झित विनयं मानकरण प्रकारस्तु वर्णयितु मारभ्यते ।
इदं नायककर्त्तृकं प्रथमोपायात्मकं चाटुवचनं एतदिति मे मम एतत्
: पञ्चसायं प्रार्थनन्तु अनुमन्तव्यं अङ्गीकर्त्तव्यमित्यर्थः ।

(२१) घर्म्मलेशैः स्वेदाम्बुकणैः घर्मः स्यादातपे ग्रीष्मेऽप्युष्ण स्वेदा-
म्भोरपि इत्यभिधानं भूयते उत्पद्यते इत्यर्थः ।

मल्लि । संव्रीडं तिष्ठति ।

सार । महाभाग ! या सुणादि एशा मह वअस्सा तां तुमं एव्व भण ।

मारुतः ।

(२२) उत्सङ्गोऽयं विपुलजघने भूषयत्वेष पाणिः
संवाहाय स्पृहयति शनैरर्पयस्वात्र पादम् ।
वक्षस्यस्मिन्नपि च कुचयोः स्वैरमारोप्य भारं
सत्वाऽसत्वोल्लिखित विभवं मध्य मुत्थापयस्व ॥

मल्लिका । स्वगतं । हन्त । मधुर मधुरा अस्स उल्लास चाडुपरिपाडी । सारसिकया सह शिलातले एव उपविशति ।

मारुतः । स्वगतं । हन्त लज्जावती प्रस्तर एवोपविष्टा उपालभे तावत् ।

---

(२२) उत्सङ्ग इति । अयं उत्सङ्गः हे विपुलजघने ! एनं इति शेषः । स्वं उत्सङ्गं भूषयस्व अधनसंस्थापनेन अलङ्कुर्वित्यर्थः । एष पाणिः संवाहाय स्पृहयति । अत्र प्राणो पादं शनैः न तु जवात् अर्पयस्व । अतिमात्र मृदोः पादस्य पाणितल खरभवार्पणबाधां बोढुमक्षमत्वादिति भावः । ततः कर्त्तव्यं विशेषमाह । अपि च अस्मिन् वक्षसि कुचयोर्भारं स्वैरं स्वच्छन्दमारोप्य मध्यं कर्म्म सत्वाऽसत्वैः सत्वाऽसत्वैः उल्लिखितः तनूकृतः उत्कीर्ण्णं तनूकृतयोरुल्लिखितमिति नानार्थं रत्नमाला । विभवः सामर्थ्यं पाटवमिति यावत् । यस्मिन् कर्म्मणि तद्यथा भवति तथा इत्यस्य मन्द मन्द सम्यक् तयेति भावः । उत्थापयस्व उपरिष्टाद्धारयेत्यर्थः अनेन हंसनामा बन्धविशेषो व्यज्यते । तदुक्तं शृङ्गार प्रबन्धप्रदीपे । अर्द्धोत्थितोरुरेखायाः पुटीकृत पदद्वये । आसीनेन कृतं यत्तु हंसबन्धः स उच्यते । तत्राङ्गना प्रणयिनः करयोः स्वपादौ दीर्घौ न्यस्योनि सुरवि स्वमुरोऽङ्गुलं संयोज्य कण्ठलुलिता प्रविशालयेत् सा श्रोणीं भवेत् सुखपदं स च हंसबन्ध इति ।

मुग्धे ! नूतनकर्णिकार कुसुमापातादपिभ्रक्तिदं
पाशाशासिकया किमित्य करुणे प्रख्यापयस्यङ्ककम् ।
यद्यात्मीयमिति भ्रमस्तव महान् प्रागेव नासीदपि
त्वद्यारभ्य ममैव तत्तव पुनर्ज्ञातव्यमेतद्वपुः ॥ (२३)

मल्लि । वस्मं । बगतं । मज्जउत्तस्स एदस्सिं महन्तो पेम्माणुबन्धो सरीरे वि। कधा पिवेद तुम्हे पेमसं । सीदमक्खं । अच्छिमो तुम्ह उथ तह णाम परोक्खे उक्कण्ठिमा भविअ, अज्ज सण्णिहिदे मज्जउत्तो मम्पाणं वसेव । इति किञ्चिदिव इहा सख्यं आवर्त्तते ।

माधवः । स्वगतं । बगतं । स्वत एतिस्मुरमणीयः प्रेयस्या भाव व्यतिकरः ।

प्रधानया प्रिय सखीमपि वञ्चयित्वा
मुग्धारविन्दमधुरं मुखमुन्नमय्य ।
दृष्ट्वापि नैव विहितः सहसा कटाक्ष-
विभ्रमर्थं मयि पुनः प्रति संहृतश्च ॥

विनयस्य । एवं मन्ये ।

---

(२३) मुग्धे इति । हे मुग्धे ! मूढे ! नूतन कर्णिकार कुसुमापा तादपि लघु कातरं इदमङ्गकं कर्म हे करुणे ! किमिति कस्मात् पाशाशासिकया पाशावे आसिकया खित्वा प्रख्यापयसि दर्शयसि इति शेषः इदमङ्गं आत्मीयमिति यदि स्वीयमिति मन्ये इत्यर्थः । तव महान् भ्रमः बुद्धिव्यामोहः । अन्यथा नैवं ब्रूया इति भावः । तर्हि तदुक्तदीयमित्यत आह । एवं आत्मीयत्वेनेत्यर्थः प्राक् पुरा नासीत् । अपि तु किन्तु तत् त्वदीयमङ्गं अद्यारभ्य ममैव एतद्वपुः पुनः करनिर्दिश्यमानं मदीयमङ्गं त्वित्यर्थः । तव त्वत् सम्बन्धि ज्ञातव्यं इति योज्यम् ।

व्रीड़ा वेला रुद्ध सागर तोयमिव योषितां हृदयम् ।
रागेन्दुरुदय मानो भूयो भूय स्तरङ्गयति ॥ (२४)

कौतुक्यं । हन्त चेतश्च चिरकाङ्क्षितार्थं साधनेऽपि वैहस्त्यम् । (२५)

नीवी दृढ़ार्पित करां निविड़ीकृतोरु
व्रीड़ानतां तत इतो वदनं हरन्तीम् ।
आरोप्य वक्षसि सुखं परिरभ्य मेनां
वालां वलादभिलषामि न पारयामि ॥

भवतु पुनरपि प्रार्थये । प्रकाशं । अयि ! मल्लिके !

इदं दूर्वाकाण्डद्युति मुचिकपोले कतिपयैः
अमाम्भोभिः कीर्णं सहज वकुला मोद सुभगम् ।
समाकाङ्क्षे ताम्राधर मनु मनुष्व प्रियतमे !
मनोज्ञन्ते पातुं मुखकमलमाघ्रातुमथवा ॥

अथवा । वितरच कुचयोस्त्वदर्शनोपक्रमाणां
मदन शर रुजानां शान्तये मामकीनाम् ।
सकृदपि परिरम्भं सुभ्रु ! दोर्मूल कुल-
कुच घनपरिणाह व्यातयो रेतयोस्ते ॥ (२६)

---

(२४) व्रीडेति रागः अनुराग एव इन्दुः कर्त्ता उदयमानः सन् व्रीडैव वेला तया रुद्धं योषितां हृदयं कर्म सागरतोयमिवेत्युपमा । भूयो भूयस्तरङ्गयति वर्द्धयति ।

(२५) वैहस्त्यं व्याकुलत्वं विहस्त व्याकुलौ समावित्यमरः ।

(२६) वितर चेति । त्वद्दर्शनं उपक्रमः प्रारम्भः यासां तासामिति रुजाविशेषणम् ।

आश्लिष्यैक्पदे च मृगाक्षि मन्यसे चेत्
आश्लेषे स्तनतटयोरति प्रसङ्गम् ।
कूजाभिर्विहित रुजो कुहू मुखानां
वाचा वा गिरिश्य वल्गु वाणि ! कर्णौ ॥ (२७)

सखि । लज्जया तूष्णीं भवति ।

माधवः । विलोक्य । सहर्षं ।

न निषेधति नानुमन्यते वा वचसा मन्मुखी ममेप्सितानि ।
अपितु प्रणयप्रमोदलज्जा परिपूर्णं नयनोत्पलं बिभर्त्ति ॥

सार । सहि ! णं तुए एव्व भणिदं अज्जउत्त अवि-
सादा गदुअ परिरम्भि सम्भि ।

माध । मन्वावयोः प्रथम दर्शन एव वाले !
मालां कुच प्रणयिणी मयि मे व्यतार्षीः । (२८)
अद्यानयोस्तु कुचयोः परिरम्भ दाने
किं चिन्त्यते क्व नु गतः स उदारभावः ॥

अथ यद्येवं न करिष्यसि ।

(२९) स्यन्दन्ते जयमान कैरव मधुस्यूताश्च मन्दानिलाः
सन्ध्येते मदनास्त्र पावक शिखास्वन्द्रांशवः प्रांशवः ।

---

(२७) हे वल्गुवाणि ! मञ्जुलवचने ! इति साभिप्राया सम्बुद्धिः ।
वाचा वा कुहूमुखानां कोकिलानां कूजाभिः विहितरुजौ कर्णौ कर्म्म
पिधेहि इत्यन्वयः ।

(२८) व्यतार्षीः । अदाः इत्यर्थः विपूर्व्वात् तृधातोः कर्त्तरि परस्मै-
पदाल्लुते लुङ् विश्राणनं वितरणमित्यमरः ।

(२९) स्यन्दन्त इति । जायमानानां विकसतां कैरवाणां मधुभिः
स्यूता प्रोताः तन्मधुकण वाहिन इत्यर्थः । इति मन्दानिलविशेषणं

कदम्ब नवकुड्मल प्रकर गुम्फिता नन्वियं
मनोभव समर्पिता स्फुरति कापि हारावलिः ॥

सार । विलोक्य । संकेतमाश्रित्य । स्वगतं ।

प्रियपाणि पल्लवतलाभिमुद्रितः
सुदृशः स्तनः श्रमकणैः करम्बितः ।
अनुयाति मङ्गलकुले प्रयोल्लस-
न्मदनाभिषेक मणिकुम्भडम्बरम् ॥ (१२)

सार । ता जाव अहं लअन्तरिदा होमि ।

मञ्जि । स्वगतं । हन्त ण सक्कुणोमि अज्जउत्तस्स हत्थ
कमलादो त्थणं अवहरिदुं । कथञ्चिदपहरति ।

मार । सविषादं । हन्त ।

सकृदिव समर्प्य बाले मम हस्ते मदन धर्म्म तप्तस्य ।

---

मञ्जरीं कथं नु भजसे कस्मात् मनुषे इत्यर्थः । तर्हि कण्टकितत्वेन सर्वविषयं तत् किमित्यत आह कदम्ब नवकुड्मलेति । शेषं स्पष्टम् । तथा च मन्मथार्पिते कदम्ब कुड्मले हारे ते पुलक मञ्जरीति भाव इत्यर्थः । समकठोरयोरिति स्तनविशेषणेनास्याः सुखसौभाग्य सम्पत्तिः सूचिता । तदुक्तं शास्त्रे यस्या स्तनौ समौ स्निग्धौ शिरारोम विवर्जितौ । हस्तिनासोरु जङ्घा च सा कन्या लभते सुखमिति । स्तनौ च सुदृढौ यस्याः पीनोन्नत युगौ समौ । सुमांसलौ च स्निग्धौ च सा सौभाग्यवती भवेत् इति च ।

(१२) प्रिय पाणीति । करम्बितः खचितः करम्बः शबरः शारः संश्लिष्टः खचितः समा इति हलः । मङ्गलः मङ्गलार्थं यो विशेषयः सर्वकल्पितः प्रणी तेन उल्लसन् यो मणिकुम्भः तस्य डम्बरं आडम्बर-मित्यर्थः ।

अपहरये कुचकुम्भं द्रवित करादस्त कुम्भमिव ॥

मल्लि । स्वगतं । हद्धि अज्जउत्तस्स करकमलादो ओसरन्तीए मह पुणोवि दुव्विसहा जोण्हा ।

मारु । स्वगतं । भूयोऽपि साहसमुपन्यसामि । प्रकाशं । अयि ! प्रिये मयैव मकरुणासि ।

उपरि पतति चण्डे चन्द्रिका श्वेत वह्नौ
मरुति किरति विष्वक् पुष्प धूली कुकूलम् ।
प्रविशतु मदनाग्निप्लुष्ट शेषं वपुर्मे
परिचल दलि धूमं पल्लवाङ्गार तल्पम् ॥ (२२)

यावत् पर्यन्त भाजो लतायाः पल्लवै स्तल्पं कल्पयामि ।

निष्क्रान्तः ।

मल्लिका । भयं नाटयति ।

सार । स्वगतं । साहु पाठन्तं महाभाएण । प्रकाशं । सहि ! निक्करुणि पेच्छ पेच्छ सअं एव्व किसलएहिं तप्पं कप्पिअण पविसइ महाभाओ ।

मल्लिका । ससम्भ्रममुत्थाय । अज्जउत्त ! मा मा साहसं

---

(२२) उपरीति चन्द्रिकैव श्वेतवह्निः शुक्लवर्णोऽग्निः प्रविष्टोऽग्निः स्मरः अयन्तु श्वेत इति द्वयोरेव भेद इति भावः । तस्मिन् उपरि पतति सति मरुति वायौ पुष्पधूल्येव कुकूलं तुषानलः तं विष्वक् किरति सति मदनाग्निप्लुष्टात् शेषं मे वपुः कर्त्तृ, परिचलन्तः चञ्चलो भ्रमरा एव धूमाः यस्मिन् तत् तथोक्तं पल्लवा एव अङ्गाराः तेषां तल्पं कर्म प्रविशतु । प्रपूर्वात् विशधातोः कर्त्तरि प्रार्थनायां विध्यर्थे वा लोट् ।

अणुचिट्‌ठ। सशङ्कं। इह्न पविट्‌ठो ऐव्व ता अहं वि तं इव्व पद्मव तप्पं पविसामि।

सार। विहस्य सस्मितं। तं एव्व पत्थीअदि।

मल्लिका। सत्वरं निष्क्रान्ता।

सार। विलोक्य। सस्मितं। हन्त! सअं एव्व परि-रहो मुद्धाए कअदो ता अहं वि असत्थि लआमूले चिट्‌ठामि। तथा कृत्वा सवितर्कम्। अम्ह ण जाणिदो कलअण्ठादीणं वुत्तन्तो। कर्णं दत्त्वा। पदसद्दोविअ।

ततः प्रविशति भ्रमरक द्वितीयः कलकण्ठः।

अवगुण्ठिताश्च रमयन्तिका नवमालिका कालिन्दी मधुकरिकाः

कलकण्ठः। भ्रमरक! कथमाश्रमे न दृष्टो मल्लिका सखो वयस्यः।

भ्रमरकः। णाह! भअवदी असमेसु दिट्‌ठव्वं।

कल। भवत्वेषु चन्द्रिकावतारसुभगेषु लतामूलेष्वन्वेषाम:।

सर्व्वाः। पदिट्ठि णाम उत्थ पाम्ह पिअसहीए मल्लिआए दंसणाअ।

नवमा। सहीओ सह पंसुकीलणादो आरहिअ एत्तिअं समयं पिअसहीए अमुक्कवासा अज्ज अहं अदंसण दुक्खं जाणामि।

सार। विलोक्य सहर्षं। हन्त मद्द चिन्तअं तीअं एव्व आअदा एदे।

कल। विलोक्य सहर्षं। इयं सारसिका।

सर्व्वाः । सहर्षं । अज्ज हे सारसिआ ।

सार । निर्वर्ण्य सानन्दं ।

रमअन्तिआवि एसा । उपसृत्य । महाभाअ ! दिट्ठिअ वड्ढसि पिअदमा लाहेण । रमयन्तिकां प्रति । सहि दिट्ठिअ लड्डासि ।

रम । सहि । सारसिए ! कहिंणु मल्लिआ ।

इतराः । तुरअ तुरअं भण ।

सार । सखेदं सदैन्यं । एत्थ लआ पहिवे अज्जव्व कह्वि मारुएण णं सङ्कमिअ दूह आअदह्मि ।

नवमा । सहर्षं सविनयञ्च । कालिन्दि ! लज्जावइ खामे पिअसही णाम गब्भेहिं वअणेहिं ।

कल । पुरतो दृष्ट्वा ससम्भ्रमं । अहो ! सर्वतः संक्षुभित इवायं प्रदेशः । पुनर्विलोक्य । सारसिके ! पश्य पश्य

निरन्धहिन्वन्त्र किरण महिमानं हिमरुचः
प्रतिग्रस्तच्छूंषि प्रकटित भयाश्चर्य्य मभितः ।
तमो वा तेजो वा तदुभय परिप्रक्तिरथवा
किमप्येतत्तत्त्वं तिरयति जगद्दीपयति च ॥(२४)

सर्व्वाः । सभय विस्मयं पश्यन्ति ।

नेपथ्ये । हा प्रिये ! मल्लिके !

---

(२४) निरन्धादिति । अथवा तदुभय परिप्रक्तिः तदुभययोः तमस्तेजसोः परिप्रक्तिः सम्प्रक्तिः सम्मिलितोभय स्वरूपं वेत्यर्थः । किमपि अनिर्व्वचनीयं एतत् दृश्यमानं वस्तु । जगत् कर्म्म तत्त्वं सत्यत्वेन तिरयति आच्छादयति दीपयति प्रकाशयति चेत्यन्वयः ।

कल । सामर्षं सविषादश्च । हन्त वयस्यस्याय मार्न्ताक्रन्दः ।

सर्व्वाः अशनि ताडिता इव भवन्ति ।

कलकण्ठः । सत्वरमुपसर्पति ।

ततः प्रविशति सवाष्पवदनो मारुतः ।

मारुतः । हा ! प्रिये ! क्वापहृतासि

स्फुरति कथयैवात्मा चेतो निमग्नमिवानले

भवति च वपुः स्वेद् ग्रावादिवाधिक विह्वलं

अयि हतविधे ! प्रापय्य प्राक् तथा पद् मुच्चकैः

अकरुणा कथमन्धे कूपे निपातयसेऽद्य मां ॥

कल । उपसृत्य । सखे किमासीन्मल्लिकायाः ।

सर्व्वाः । उपसृत्य । महाभाग ! किं ण पियसहीए

मारु । विलोक्य सवासानिश्वासं । स्वगतं । हन्त आगता एतेऽपि । प्रकाशं । हा सखे ! व्यर्थस्ते परिश्रमः । हा सख्यः ! मुषितं वो जीवितम् ।

कलकण्ठः । सखे ! कथमव्यक्त कथनेन खेदयसि । ननु पृच्छ्यते किमासीन्मल्लिकाया इति ।

सर्व्वाः । महाभाग ! णं दाणिं एव्व तुमं पलुव तप्पे संपत्ता ।

मारुत । तर्हि श्रूयतां श्रवणपरुषं

अव्याज रम्य मधुर ग्रह लोलुपोऽहं

व्रीडानतं वदनमुन्नमयामि यावत् ।

तावत् कुरङ्गमिव कातरकातरे ते

नेत्रे निमीलितवती वत हा हतोऽस्मि। इति पतति

कल। रुदित्वा। सखे! यदि मूर्च्छिता तर्ह्येहि शिशिरै

राश्वासयामः।

सर्व्वाः। सबाष्पं। झत्ति आसा सेह्य पिअसही।

सार। रुदित्वा। महाभाग! कहिअं मह कसे पुढ़

एव्व भअवदीए। मल्लिआ पुढ़म सङ्गमे मुच्छिआ भवि

दित्ति। ता आसा सेह्य।

मारु। अन्यदपि दारुणं श्रावयिष्यामि।

कल। साशङ्कं। किमिव।

मारु। अथ तस्मिन् क्षणे।

तां पितुर्णौ लुलित विह्वल गात्र...

हा हा किमेतदिति यावदहं विभ...

ताव द्विमोह करणं मम नैव जाने

भूतेन केनचिदपह्रियतेस्म बाला॥ (२५)

इति मोहं नाटयति।

कल। सबाष्पं धारयन्। हन्त! तत् प्रयुक्त ...माग

इष्टः संक्षोभोऽपि।

नव। हा पिअसहि मल्लिए! देहि मे वअ... इति

च्छिन्नपातं। (२६) पतति।

---

(२५) करणं इन्द्रियवर्गमित्यर्थः।

(२६) छिन्नं पातं पतति। छिन्नवत् पततीत्यर्थः। ...

कर्मणि चेति णमुल्। कषादिष्विति पततेरनुप्रयोगः।

इति श्रीमल्लिकामारुतव्याख्याने परिमलाख्याने अष्ट...

कालिन्दी। हा हदयदेव्व! सय्यं एव्व वड्ढिदा लदा कहं णु फल समए लूणा। इति नवमालिकां धारयति।

रम। हा मन्दभाइणीए मह याव मेणच्चिय एसो प्पणत्थो। हा सहि मल्लिए! मम्मि ण एहि। इति पतति।

मधुरिका। हा च्छिणो च्चियन्तेण मल्लिआ सुहेण सव्वोवि बन्धुवग्गो मालवोम्न। इति धारयति।

भ्रम। हा सामिणि! कहिं णु पणाइं दासवग्गं उवक्खिअ गआसि।

मारु। संज्ञां लभते।

सार। नातिघोवं। स्वगतम्। भण्णे सहं एसो जो प्पविञ्जा पहावो भअवदीएत्ति। प्रकाशं महाभाय! णादि संभमो कादव्वो भअवदिं दट्टूण सव्वं कप्पइ स्सामो।

कल। युक्तमाह सारविका। तद्गच्छामो भगवतीमन्तिकम्।

मारु। सत्वरम्। यद्भवद्भ्यो रोचते।

इति निष्क्रान्ताः सर्व्वे।

इति अष्टमोऽङ्कः।

## अथ नवमोऽङ्कः ।

ततः प्रविशति सारसिका ।

सार । सोच्छ्वासम् । दिट्ठिआ जोअ विज्जा पहावदो परोक्ख वोह सत्ताए (१) भअवदीए । जम्मन्दरे कुविदस्स महेसिणो सा वो वट्ठिअ मुच्छा मुसिअ करणा मज्झिम भत्ति कञ्चीउरं णीदा । तहिंसिअ सिरिकाम च्छोप्प सादा सादिअ सोमन्तमणि फल मत्त णिसुणिअ मोहा अदूरेणेअ समएण पुणो पच्चाणीदाअ । सानुतापं । माकओ उण ताणि ताणि मङ्गलेदराणि आसङ्कमाणो मए उण अहुओ णिवारिदो मणि जडुतडेसु कलअण्ठ दुईणो सोअ-सज्जा उलो परि छिण्णइ । णोमालिआमुहो सद्दो अणोवि देसु एव्व पदेसेसु । सोच्छ्वासं । इदो वरं ताणंवि मुहुत्त परिमिदं एव्व वसणं । जदो भअवदो एहिं कञ्चो-

---

अथ नवमोऽङ्कः ।

(१)योगविद्याप्रभावतः योगविद्यायाः ज्योतिष्मत्याख्य मनः प्रवृत्त्या-लोकविन्यासरूपायाः प्रभावतः परोक्षबधे अप्रत्यक्षस्य विज्ञाने शक्तया सामर्थ्यं युक्तयेत्यर्थः । तदुक्तं योगपातञ्जले प्रवृत्त्यालोक न्यासात् सूक्ष्म व्यवहित विप्रकृष्ट ज्ञानं इति । केचित्तु तु योगविद्यायाः प्रतिभाख्यायाः प्रभावतः इत्यर्थः प्रतिभाद्वा सर्वमिति सूत्रादित्याहुः । अन्ये तु योग-विद्यायाः धर्मलक्षणावस्थाख्य परिणामत्रये एकविषयक ध्यान धारण समाधि लक्षणक संयम रूपायाः प्रभावतः परोक्षो यो बोधः तस्मिन् अतीतानागतज्ञाने इत्यर्थः । शक्तया सू० परिणाम त्रय संयमादतीताना-गतज्ञानमिति प्रेतुः ।

उरादो आमच्छन्तो एव्व एव्व अस्समे मम्भुहादो माअवस्स असाणं अ वसणं सुणिअ तेणव्व ओअविज्जा पहावेण मणि अड्ढं एव्व मरणं पोरवदो। अहं बि अवब सोप-बिडलं अस्सवीसवसुकुडुम्बं आसासेमि। णमो णिवोद्म।
हुं पवुट्टो एव्व तमालजाल ष्णिणिद्ध जलहर परिणाह कवलिअ बराऽभो अ दंसणमेत्त बिहडन्त बिरह्रि अणा उसो वरिसो ता मुहुत्तपरिमिदं वि माअवस्स महन्तं वसणं सहेमि। इति निष्क्रान्ता। प्रवेशकः।

ततः प्रविशति माधवः कण्ठकरठस्र।

माध। सकरुणं।

नैवोपायान् गणयति तथाऽगोचरे विक्रमाणां
त्रैलोक्येऽप्यनिवृत्त नियमादेधमाने विधातुः।
क्रूरातङ्कक्रकचविदलद्धैर्यसारा वतामो
संसीदन्तो व्यसनदहने कूलपातं पतामः॥ (२)॥

माध। सकरुणं निश्वस्य। हा प्रिये! कामवस्थां प्रपन्नासि।

तन्वङ्गि! दर्शय तदङ्गज सार्व्वभौम
माङ्गल्यदाममधुरं वदनेन्दुबिम्बम्।
किं नेच्छसे महति सन्तमसे पतन्तं
अन्धं भविष्णु सकलेन्द्रियमात्मदासम्॥ (३)॥

---

(२) कूलपातं पतामः कूलवत् पताम इत्यर्थः। तटवत् अपात-पतमाः स्म इति भावः।

(३) तन्वङ्गीति। अङ्गजसार्वभौमस्य मनूमथ चक्रवर्त्तिनः मा-ङ्गल्यं मङ्गलप्रदं यत् दाम तेन मधुरं मनोहरं सम्बन्धेत्।

कलः । हन्त ! भगवत्यपि न ज्ञायते क्व गतेति ।

ईषत् सोच्छ्वासं । अथवा

परमवलम्बोऽस्माकं भगवत्यन्वेष्टुमगमदित्याशा ।
पततामगाधकूपे पारे रूढेव तृणवल्ली ॥ (४)

मारुतः ।

हा मज्जीवितमल्लिके ! क्व नु गतं दासे मयि प्रेम तत्
त्यक्त्वा मामशरण्यमार्त्तमदये क्व त्वं गतासि स्वयम् ।
पृच्छ त्वं कलकण्ठमुद्भ्रमति मे चेतो धृतिर्ध्वंसते
चूडायामयमञ्जलिर्मधुरया वाचा सकृत् संलप ॥

सवाष्पातिशयं । कथमङ्कस्थितैव गतासि ।

स्मरामि तव तत् प्रिये ! जघनभारमन्दं गतं
सखीव वचनकाकुभि (५) स्तदपि सस्मितं व्रीडितं ।
चलाचलकनीनिकातरलनोत्तरङ्गं च तद्
विलासमन्थरं वलितकन्धरं वीक्षितं ॥ (६) ॥

---

(४) काञ्चित् युक्तिमाह । अथवेति । अथवा अगाधः अतलस्पर्शः यः कूपः तस्मिन् पततां जनानां पारे कूपतीरे रूढा तृणवल्ली वेत्यु पमा अस्माकं परं केवलं अवलम्बः आश्रयभूता भगवती मन्दाकिनी मल्लिकामिति शेषः । मल्लिकामन्वेष्टुमगमत् इति आशा अस्तीति भावः ।

(५) सखीवचनानां काकुभिः परिहासिक स्वरविकारैः सस्मितं तत् प्राकट्यं व्रीडितमपि स्मरामीत्यन्वयः ।

(६) चलाचलायाः कनीनिकायाः तरलनेन उत्तरङ्गं उन्नततरङ्गं अतएव विलासानां तात्कालिक स्वकीय विशेषाणामित्यर्थः । तात्कालिको विकारः स्याद्विलासो दयितेक्षणे इत्युक्तेः । अतेन (संख्याबाहुल्ये

कल । स्वगतं । हन्त केनोपायेन वयस्यं मा क्षिपामि ।

मारुतः । सकरुणाक्रन्दं ।

हा शृङ्गार रसाधिराज ! करुणो जातोऽसि हास्योऽथवा
हा कन्दर्प ! हतो मदस्तव धनुः सन्यस्य गच्छाटवीम् ।
हा भ्रूचक्र ! परिष्कृतिस्तव गताद्या मत्प्रियेया यया
हा विश्वस्य विलोचनानि मुषितं तद्वत्तपस्या फलम् ॥ (७) ॥

---

इदन्तुपलक्षणं) मन्थरं मन्दशृङ्गारं बहुविध विलास पूर्णमित्यर्थः । तरलमन्थरलुण्ठनकुञ्चितान्यनेक नामानसदभिनिति भावः । प्रतिपादितव्य तारका व्यापारभूतानां अनेकप्रकारविलासानां सन्नेन अलङ्कृतेयम् दृष्टिपातानां अष्टधा स्थाविजा दृष्टिः त्रिंशतिर्व्यभिचारिणाम् । कान्ता-हास्यत्यादि भेदाश्च दृष्टयस्त्वष्टधा । इत्युक्त दृष्ट्यो लोकदृष्टिमार्गसुपा-मताः । षट्त्रिंशत् किन्त्वनन्ताः स्युः ताराभ्रूपुटकर्मणा सन्दीमिश्च-चापलेताः प्रत्येकं वक्तुमक्षमा इति । वञ्चिता अन्तरा यस्मिन् तत् तथोक्तं वीक्षितं शृङ्गारदृष्टिपातस्य चरामीत्यन्वयः ।

(७) हा इति । हा शब्दः खेदे । खेदप्रकारमाह । शृङ्गार-नामक रसाधिराज रसश्रेष्ठ ! । सर्वरसमूलत्वात् श्रेष्ठत्वोक्तिः । यदाह प्रकाशकारः । शृङ्गार एक एव रस इति सर्वरसानां शृङ्गारमूलत्व प्रति-पादन प्रपञ्चस्तु । तत्कम्यत्वेन हास्यः इत्यादिनाम्यत्र रत्नापणादौ द्रष्टव्यः । करुणः करुणरसः शोकपरिपोष इति यावत् । जातोऽसि प्रियाया मृत-त्वाभिप्रायेण करुणो जातोऽसीत्युक्तिः । औचित्येन परिपूर्णो योगसेव-नादि विभावैः मधुराङ्ग विचेष्टिताद्यनुभावैः हर्षादि व्यभिचारिभिश्च सम्यावरण विहितविशिष्टो यो रति भावस्तथा भूतस्य तव । व्यसनेष्टनाशादि विभावैः निश्वासोच्छ्वासरुदितादिभिरनुभावैः मोह दैन्यविषादादि व्यभिचारिभिश्च सम्यावरण विहितविशिष्ट स्थायि शोकत्वेन परिणामात् इति भावः । तथाच रतेः शाङ्कर्य्येऽपि स्थायि शोकादसाधारणात् कारणात्

निश्वस्य। अयि! दयित मारुते मल्लिके कुतो माम-काण्ड एव परित्यज्यसि कमपराधं पश्यसि। विचार्य।

भवतु ज्ञातं।

> अव्याज विभ्रममयैरनवद्य हृद्यै-
> रत्नामचम्पकविलासधरैर्यदङ्गैः।

---

करुणरसत्वेन भिन्नोऽस्मीति निष्कृष्टोऽभिप्रायः। अथवा पक्षान्तरे हास्यः हास्यरसः स्वनिष्ठो हासपरिपोष इति यावत्। गत्रुभिः स्वयमपहास्य इत्यतः तान् मम्बरकादीन् प्रति परनिष्ठहासपरिपोष इति वा जातोऽस्मि इति। काकाक्षिगोलकन्यायेन अत्रान्वयः। अङ्ग वैकृत्यादि विभावैः विकृत वाक्याद्यनुभावैः आलस्यासूयादि व्यभिचारिभिश्च सम्यावरुद्ध-र्विहितस्य स्थायिहासत्वेन परिणामादिति भावः। (कथनङ्ग स्थितेश्च मतासौन्दुक्त्या स्वनिष्ठ स्थितं गम्यते) अत्र च रतेः बाहुल्येऽपि स्थायि हासा इत्याकारणात् कारणात् हास्य रसत्वेन भिन्नोऽस्मीति निष्कृष्टोऽभिप्रायः। हा! कन्दर्प! मन्मथ! तव दर्पः मल्लिका-वल्या त्रिलोक विजयित्वजो मोहानन्द सम्भेदः हतश्च नाशितः अव-लम्बनाभावादिति भावः। चतुः कर्म सम्बन्ध सन्तव्य कुर्वौ मध्य-पलायस्व। सतां मार्गे स्थाने मरण अथवा दूरसरण मिति न्यायात् अधुना तव निर्जन प्रदेशपलायन मेव श्रेय इति भावः। हा खुचक्र! भूमण्डल! तव परिष्कृतिः अलङ्कृतिः गता नष्टा। यया परि-ष्कृता अलङ्कारभूतया मल्लिकयेति यावत् द्यां स्वर्गं अलङ्घेयाः अत्यन्ताभः अतिशयित वद्भूरिति यावत्। स्वर्गस्यापि मल्लिका सदृश सुन्दराङ्ग माल्ङ्कृतत्वा भावादिति भावः। सा परिष्कृतिरिति पूर्वेन सम्बन्धः। हा विश्वस्य लोकस्य जनस्येति यावत्। विलोचनानि इति सम्बोधनम्। वः तत् अनिर्वचनीयं तपस्याफलं पुण्यदीया परिमितैकी भूव सत्-कर्मों परिपाकः मल्लिका प्रेमत्वं रूपः इति यावत्। मुषितं अपहृतं तस्याः प्रणाशादिति भावः। यद्वा तपस्या फलं तपस्या फल भूता मल्लिका इत्यर्थः।

मन्मूलमङ्गजरुजा (८) चिरमन्वभावि
मन्ये मनस्विनि ततस्त्वममर्षितासि ॥

सोपालम्भम् । यद्येवं किं न जानासि त्वद्दर्शनतः प्रभृति अनितर साधारणीमवस्थाम् ।

मत्वालापं तव पिकवधू कूजिते उन्मनाये (९)
नेत्रच्छाया प्रणयिषु रमे (१०) दीर्घिकेन्दीवरेषु-
प्रत्युद्गच्छाम्युपवनतले सस्मितां त्वां विशङ्क्य
प्रत्यग्रोद्यत् कुसुमकलिकां बालमन्दारवल्लीम् ॥

अपिच ।

त्वद्वीक्षासु निमेष कर्म्म मनुते दृष्टिर्दृढामर्गलां
तन्नामाक्षरमेव वक्ति रसना वाक्यान्तरे प्रस्तुता ।
त्वत्संकल्प समागमेष्वपि घनोत्तुङ्ग स्तनालिङ्गने
वक्षो मे व्यवधानदाने परुषान् हारानपि ध्यायति ॥(११)

---

(८) अव्याजेति उक्त विशेषण विशिष्टैः अङ्गैः यत् यस्मात् कारणात् अङ्गजरुजा मन्मथ व्याधिः चिरं मन्मूलं मन्निमित्तं अन्वभावि अनुभूता । हे मनस्विनि ! प्रशस्त मानसे ततः चिरतर मन्निमित्तक मन्मथ व्याध्यनुभवाद्धेतो स्त्वं अमर्षितासि कुपितासि इति मन्ये । अन्यथा प्रशस्त मनस्कत्वान्नैवं कुप्येरिति भावः ।

(९) उन्मनाये । अत्युत्सुकः उत्सुको भवामीत्यर्थः । उत्क उन्मना इत्यमरः । अभूततद्भावविषयात् उन्मनः शब्दात् भवत्यर्थे भृशादित्वात् क्यङ् सलोपश्च । सू । भृशादिभ्योभुव्यच्वेर्लोपश्च हलः इति । ततो ङित्वात् कर्त्तर्य्यात्मनेपदे लटि उत्तमैकवचनम् ।

(१०) रमे क्रीड़ामीत्यर्थः ।

(११) त्वद्वीक्षास्विति । दृष्टिः कर्त्री त्वद्वीक्षासु विषये निमेष-कर्म्म पक्ष्मपतनव्यापारं कर्म्म दृढ़ामर्गलां दृढ़ार्गलमिव प्रतिबन्धकत्वेन-

आकाशे । भगवति मन्दाकिनि ! त्वमपि कथं न लक्ष-
यसि । अथवा अवगतमेव ।

परमवसितां प्राणेनापि प्रियां बत मल्लिकां
स्वयमनुयती(१२)शोकावेगाद्वपुष्यपि निस्पृहा ।
नयनसलिलैः श्यात्कुर्व्वाणे भुवं निजधारणा
बलसमुदिते भस्मीभूतासि योगहुताशने ॥

कलकण्ठः । कष्टं भोः ।

क्षिप्ताः पातालकुक्षौ किमु किमु निरये यन्त्रिताः किं प्रविष्टा
मृत्योरास्ये निमग्नाः किमु निविड़तमे वाडवे धूमचक्रे ।
विघ्नौ नो दुर्विभाव्ये तमसि निपतिताः क्वापि कर्त्तव्यमूढ़ाः
नद्याऽऽवर्त्तानुघूर्णत्प्लुतया कणिका निर्विशेषा भ्रमामः ॥

---

त्यर्थः। मनुते वाक्यान्तरे प्रस्तुता रमणा त्वत्सामाप्यरमेव वक्ति। त्वत्सद्भूत्य-
समागमेष्वपि त्वया सह मनोरथो परचितसम्भोगेष्वपीत्यर्थः। घनोत्तुङ्ग
स्तनालिङ्गने विषये मे वक्षः कर्त्तृ हारानपि व्यवधानदानेन हेतुना
परुषान् क्रूरान् त्वदीयस्तनयोर्मदीय वक्षसश्च मध्यवर्त्तित्वेन आलि-
ङ्गनविरोधित्वादिति भावः ध्यायति चिन्तयति। यदाङ्गरम्येऽपि
रतिसमये रमणीनां भूषाहारादिस्तु भूषणं भवति इति।

(१२) परमिति। प्राणेन परं केवलं अवसितामपि प्रियं
प्रेमास्पदां मल्लिकां बतेति खेदे स्वयं अनुयती अनुसरन्ती सती शोका-
वेगात् दुःखातिभूमि संरम्भात् वपुष्यपि निस्पृहा इच्छारहिता
नयनसलिलैः श्यात् कुर्व्वाणे श्यात्कारकरे (श्यात्कारो वह्निनिर्वापण-
शब्दः) निजा या धारणा नाभिचक्रादिषु देशेषु चित्तस्य धृतिमात्रे-
बन्धरूपा। उक्तञ्च देशबन्धश्चित्तस्य धारणेति तस्याः बलेन सामर्थ्येन
समानजयरूपेण समुदिते आविर्भूते। उक्तञ्च समानजयात् ज्वलन-
मिति। योगहुताशने योगाग्नौ ध्रुवं सत्यतया भस्मीभूतासीत्यन्वयः।

माधवं प्रति। वयस्य! समाश्वासयात्मानम्। ननु श्रूयते
[...]र्थेव विपद् सौख्यन्त इति।

माधव। निःश्वस्य।

यामस्याऽऽविशति प्रवाल भवनं द्राक् दाहभीत्याकुला
मा मा साहसमार्य्यपुत्र! रचयेत्या मुग्धमाभाषिणी।
आलम्बिष्ट करेण कम्पयुजा वेलाचले ताहशीं
प्रत्याख्यातुमतीं रमामिव कथं धैर्य्यं धरेयं सखे!॥

अपि च। तस्मिन् मन्दारमूले
परपरिणये (१२)जाते प्राणञ्जिहासु रयञ्जितं
प्रियसहचरी बुध्वा प्रेमाकुलं परिरभ्य माम्।
विलपितवती यद् यद्बाला सगद्गदिकाक्षरं
परिसरभुवा तत्तत् सर्वं त्वयापि सखे! श्रुतम्॥

आवेगं नाटयन्। हाः!

किमपि करणाराचस्वन्तमः पिदधाति मे
भ्रमति हृदयं मोहाविष्टं विषीदति जीवितम्।
हहह! सहसा सर्व्वाङ्गीणः (१४) प्रसर्पति कश्चन
प्रलय शिखिना तुल्य स्तापः सखे! करवाणि किम्॥

---

(१२) परपरिणये इति। परेण परिणये विवाहे जाते सति [...] जिहासुः हातुमिच्छुः। षष्ठेऽङ्के अह जीविदणिव्विसेसे खोमा- [...] इत्यादिना सहि खोमालिए जाखेहि एदं पच्छिमं परिरम्भ [...]प्रकारो विलाप इति बोध्यम्।

(१४) सर्व्वाङ्गीणः सर्व्वाणि अङ्गानि व्याप्नुवन् इत्यर्थः। तत् [...]रिः पथ्यङ्गेत्यादिना खः।

कल । सनन्दं । युक्तं न मत्तोऽस्मि वयस्य मन्यताचेन्म-
भवतु इदमेव प्रावृडारम्भ रामणीयकं दर्शयन्नीषदिनो ह-
यामि । प्रकाशं । सखे ! ननु सम्प्राप्तिं प्रयोजनं समयः । पश्य

अमीभिराखण्डलचापमण्डिते-
स्तटिद्वधूताण्डवरङ्गमण्डपैः ।
निचोलितं व्योमसमीरणेरिते
स्तमालमाला मलिनैर्बलाहकैः ॥

वयस्य ! पश्य पश्य ।

अमी किमपि वासराः प्रसुवते मुदं देहिनां
विजृम्भि नवकन्दलीदलविलीनपुष्पन्धयाः ।
पयोद मलिनी भवद्गगनदर्शन प्रोषित
कपोलकविलासिनी नयन कान्तितापिञ्छिताः ॥(१५)॥

परितो दर्शयन् ।

इह गिरिकटकेषु प्रौढ जीमूत गर्जा
स्फुटदलित विदूर क्षोणि पिञ्छीयमानाः ।

---

(१५) अमीति । नवकन्दलीनां पुष्पाणि नवकन्दल्यः पुष्प-मूलेषु बहुलमिति लुप् । विजृम्भिण्यो वा नवकन्दल्यः वर्षालक्षणतया भाविसकलसम्पत्तिसूचकानि नूतनशिलीन्ध्रकुसुमानि । उक्तञ्च काला-त्ययोगादुदिताः शिलीन्ध्राः सम्पत्सहस्रं कलयन्ति पुंसामिति । तासां दलेषु निलीनाः पुष्पन्धया भ्रमराः येषु ते तथोक्ताः । तापिञ्छाः कृताः तापिञ्छिताः तत् करोतीति णिजन्तात् कर्म्मणि क्तः । पयोदैः मलिनी भवतः गगनस्य दर्शने प्रोषितानां कपोलकविलासिनी नयनानां कान्तिभिः तापिञ्छिताः तापिञ्छाः कृताः सर्व्वत्र तमालप्राया इव श्यामीभूता इत्यर्थः ।

प्रियवयस्य ! तव दृश्यते: प्रौर्थति मुहुरामयन्तु
स्फुटित कुटज मालोद्रस्थय: कावनान्ता: ॥(१६)॥
प्रथवा । वशात्प्राकृष्टेऽपि स्वयमपि मनस्ते करिघटा
करा स्फालाल्लतिम्यद् घनघनकलकीर्णा गिरि भुव: ।
मदक्रीडत् केकिस्वन चकित वल्मीक निपतत्
फणिश्रेणी चूडामणि किरण किर्मीर ककुभ: ॥(१७)॥
अपिच । श्रामुक्त कुसुमित वालकदम्बजाल
श्यामोल्लमोद्गलित धूलि मिलद्द्विरेफम् ।
पौरस्त्य(१८)माकलित बर्हिण बर्हभारं
सेवस्व सर्वहरितापहरं समोरम् ॥
माढ । परितो-विलोक्य । सावेगं । वयस्य ! स एव दिक्चू-
ड़स्य कुमाराद्यवतार:। यत् प्रियाजन वियुक्तस्य प्राक्कृारम्भ: ।

---

( १६ ) प्रौढ़ा: या: जीमूतगर्जा स्ताभि: स्फुटं दलिताभि: विदूरक्षोणिभि: वैदूर्यरत्नस्थलीभि: चित्रीयमाणा: अद्भुतायमाना इत्यर्थ: । स्फुटितकुटजानां विकस्वरगिरिमल्लिकाकुसुमानां मालाभि: पङ्क्तिभि: उद्भ्रवः अतिसुरभिता इत्यर्थ: । कानमान्ता: वनमध्य-प्रदेशा: ।

( १७ ) वशादिति । करि घटाया। हस्तिसमूहस्य करास्फालै: समुत्कार शुण्डोत्क्षेपावक्षेपै: श्यातिम्यन्त्य: समन्तादार्द्रीभवन्त्य:, तथा घनघनकलै: सघनय: सजलरक्ति र्मेघै: कीर्णा: व्याप्ता: मदेन क्रीड़तां केकिनां स्वनात् चकिता: अतएव वल्मीकात् निपतन्त्य: सफूत्कारस्तत्-पतन्त्य: या: फणि श्रेण्य: तासां चूड़ामणिकिरणै: शिरोरत्नप्रभाभि: किर्मीरा: चित्रवर्णा: ककुभो दिश: यासु ता: तथोक्ता: गिरिभुव: ते तथापि मन: कस्मै वशात् स्वयं अप्याकृष्टे आकर्षति वा इति प्रश्न: ।

( १८ ) पौरस्त्यं प्राच्यमित्यर्थ: ।

जलदनिनदत्रस्तम्भ्याङ्गनास्वयमर्पित
स्तनतट परीरम्भ क्रीड़ा प्रहर्षुल कामुके ।
कुपित मदने काले केकाकुल प्रचलाकिनि
क्षणमपि कथं प्राणित्येष प्रिया विरहीजनः ॥ (१८) ॥

अपिच ।

एते प्रेङ्खोलयन्तो वियति घनघटो पान्तलीना बलाकाः
धाराम्भश्चूर्णयन्तः सकरक मभितश्चातकी पीत शेषं ।
सञ्चेरन् पूर्ववाताः कथमिव पथिक प्रेयसी चक्र पालो
विन्यस्ता पाश बन्धाम्बुजमलितघनश्वासहस्तावलम्बाः (२०)॥

नभो विलोक्य । सकरुणं । हा प्रिये मल्लिके !

तदर्थयस्व तव काञ्चन कर्णिकार
कर्णे जपप्रभमतन्द्रितगात्रि ! मालं ।
एषा पुनस्तव इतो गगने स्फुरन्ती
सौदामिनी भवतु सम्प्रति सख्यभाजः ॥ (२१) ॥

पुरतो विलोक्य ।

लम्बन्ते भ्रमराः कदम्बमुकुले । सोच्छ्वासं । हा मेचकाः कुन्तलाः ।

अन्यतो विलोक्य ।

संभावयन्ति चकोरकाः प्रतिवनं । सकम्पं । हा मदिरे लोचने

---

(१८) केकाकुलाः प्रचलाकिनो मयूराः यस्मिन् इति काल-विशेषणम् ।

(२०) प्रेङ्खो लयन्तः तरङ्गयन्तः प्रेङ्खोलितं तरङ्गितमिति कृदः ।

(२१) तदिति । काञ्चनकर्णिकाराणां कनकपरिम्लानकुसुमानां कर्णेजपाः पिशुनाः प्रभाः यस्य तत् तथोक्तम् ।

अन्यतो दृष्ट्वा ।

विष्वक् फुल्लति मालती सुरभिला । सशोकं । हा मुग्धमन्दस्मित !

इतरतो विलोक्य ।

ताम्रं प्रावृषि बन्धुकोषनिवहैः । साक्रन्दं । हा ताम्रबिम्बाधर !

(२२) इति मूर्च्छति ।

कल । सकरुणं । किमेतत् । धिक् कृतान्त ! अत्यन्तनिष्ठुरोऽसि । सवाष्पं । हा धिक् ! कष्टं

किं वज्रसार शतधा न विदीर्णमासीत्
अद्यापि ते हृदय भोः कठिनोऽस्यवाम्य ।
पश्यन्नपि प्रियसखस्य तथैव वर्त्ते
यच्छोकमोहमुकुलन्नयनं मुखेन्दुम् ॥(२३)॥

हन्त । जलधरारब्धं वर्णयन् । हतकोऽहमेव कारणमस्मि । नभो विलोक्य ।

जलधर जलधर मन्मथ मन्मथ पवमान पवमान ।
सर्वान् वः प्रणतोऽहं प्रियसुहृदो जीवितं भिक्षा ।

---

(२२) विष्वगिति । अत्र प्रावृड्वर्णनपरत्वेन सन्निहितानां भ्रमरचकोरादीनां उपमानवस्तुत्वेन तद्दर्शनात् क्रमेण तत्तदुपमेयभूतमालतीकुन्तललोचनादीनां स्मरणाविर्भाव इति बोध्यम् ।

(२३) किमिति । हे वज्रसार ! इति कृतान्तसम्बुद्धिः । ते हृदयं कर्तृ । अद्यापि शतधा विदीर्णम् किं कुतः नासीत् । भोः इति सम्बोधने । तत्र आत्मनि दोषमवगत्य परनिन्दकत्वं चिन्ताजन्यम् । कठिनः वज्रसारः कर्कशेन । एवकारादयम् इत्यर्थः । तत्र हेतुमाह । पश्यन्नपीति । उत्तरार्द्धः स्फुटार्थ एव । अत्र पूर्वार्द्धे कठिनोऽयमहमिति क्वचित् पाठः ।

माह । प्रबुध्यते ।

कलकण्ठः । सोत्कण्ठं ।

एष मत्प्रार्थितोऽभ्येत्य मारुतो मारुतं शनैः ।
ऐकशब्द्यादिव स्निह्यन् शीकरैः सम मोमुदीत् ॥(२४)

माह । सोन्मादं ।

कोऽयं देशः सुभगविपिनः सैव भूर्भूमितत्त्वः ।
कोऽहं वाच्य प्रचुरवदनो मन्वहं मारुतोऽस्मि ।
किं वाच्यं मे मनसि करुणा स्तायते कोविभावः
कस्मादेशोऽप्यहह मुषिता प्रेयसी मल्लिका मे ॥(२५)॥

---

(२४) एकः शब्दः ययो स्तौ तयोर्भावः ऐकशब्द्यं तस्मात् तो मारुतात्मारुतस्यादित्यर्थः । स्निह्यन् प्रीणन्ति वेत्युत्प्रेक्षा ।

(२५) कोऽयमिति । पूर्व्वार्द्धः स्फुटार्थ एव । मे मम वाच्यं कि कुतः इति प्रश्नः । मनसि करुणः करुणरसः तायते विस्तृतो भव तीत्युत्तरम् । करुणस्यानुभावत्वेन वाच्योऽहम इति भावः । अस्य शि शेषः । अत्र करुणस्य विभावः उद्दीपनविभावः कः । अत्र करुण प्रसरे उद्दीपनं कारणं किमित्यर्थः । एषः करुणोऽपि कस्मात् वि भावभूय जात इत्यर्थः । करुणस्य आलम्बनविभावोऽपि क इत्यर्थः तथाच करुणविस्तारकारणं उद्दीपनं किम् । तथा करुणोत्प समवायिकारणं आलम्बनमपि किं इति प्रश्नद्वयम् । अहह इति प्रश्नतः कारितत्वसूचकमिदम् । मे मम प्रेयसी मल्लिका मु अपहृता इति प्रश्नद्वयस्याप्युत्तरम् । अनेन प्रेयसी मोषः उद्दीपन प्रेयसी आलम्बनमित्युक्तम् । भर्मति । पूर्वार्द्धे । सैष भूर्भूमि इत्यत्र सः एषः इति पदच्छेदः । सन्धिस्तु सो स्त्रियोमे चेत् पादपू इति अनेन तच्छब्दप्रथमैकवचनान्तस्य वस्य लोपः । इद्विरेचि वृद्धिः ।

मकर। सावेगं। कथमुन्माद इव।

माध। यावदिह वनेऽन्वेषयामि। सत्वरमुत्थाय प्रचलति।

मकर। सत्यं ग्रस्त एव माधवः उन्माद कालसर्पेण। कठिन कलकण्ठ! किमद्यापि जीवसि।

माध। परितो दृष्ट्वा। हन्त सर्व्वतो रमणीयेषु कृतसम्भोगं प्रथममन्वेषयामि। हस्तेन दर्शयन्। एषु रक्तकदम्बगुच्छलाञ्छनेषु न सम्भाव्यत एव।

अत्र कश्चित् गिरिनदीतट सैकतेन
बाला मरालललितं यदि सञ्चरेत।
श्रोणीभरालसविलोलपदक्रमोत्थं
श्रूयेत मञ्जुविरुतं मणिनूपुरस्य॥

कलकण्ठः। अहो अहो परां कोटिमारूढ उन्मादस्य। यतस्तथाविधं तस्याः नाम विस्मृत्य अन्वेष्टुं प्रवर्त्तते। भवतु अहमपि एतदेवानुवर्त्ते।

माध। कर्णं दत्त्वा। सहर्षम्। सखे! अप्रमत्तः सर्व्वतः कर्णं प्रयच्छ।

इह नवकरिदानोद्गन्धि वीचीकुलस्य
द्रुमगहन निगूढे कूलभागे ह्रदस्य।
नखनिहतविपञ्ची पञ्चमस्थान मुग्धां
गिरमविशदवर्णां स्निग्ध कण्ठाः शृणोमि॥

सोपालम्भम्।

अस्थानुपेक्ष्य घनदारुणशोकदीनान्
मुक्ता सखीरपि सवाष्पकृतप्रलापाः।

पद्भ्यां कुशेशयदलादपि कोमलाभ्याम्
मुग्धा कथं चरति शैलतटे मृगीव॥

मारु। स्वगतम्। हन्त कोकिलास्वरेण भ्रमति वयस्य:। प्रकाशम्। नहि नहि मल्लिका संलपति। एषा तु।

पचेलिम जम्बूफलखण्डप्रहृष्टाया: कूजा
कोकिलवध्वा: न सखे! सख्या: स्वर: सहि स्निग्ध:।

मारु। सविषादम्। किं पिकवधूकूजितमेतत्। पुन: कर्णं दत्त्वा। हन्त स्फुटेऽपि वैसादृश्ये भ्राम्यतो।

मम कर्णौ दृषदामपि द्रवित्व(द्रवत्वात्)
प्रतिवर्णं चरिताच्छता श्रव: सु।
स्वरसं पदनिन्दिता सुकण्ठ्या:
कथमेषं पदभा मम प्रियाया:॥

सनि:श्वासम्। कस्य मुखात् प्रियतमाप्रवृत्तिमुपलप्स्ये। दृष्ट्वा सकौतुकम्। एष:

परिवृत्तिशोभनीयप्रचलद्वालतरङ्गमालभारी। (२६)॥
श्रवणहनदेवतावगाहै: परिपूत: पुरतो ह्रद चकास्ति॥

यावदेनं पृच्छामि। उपसृत्य।

(२७) ह्रद! हृदयहरे ते निम्नाभीह्रदास्मिन्
पयसि सहचरी मे स्नातुकामाऽवतीर्णा।

---

(२६) परिवृत्तीति। परिवृत्त्या भ्रमणेन शोभनीया: तथा प्रचलन्त्यश्च या: बालतरङ्गमाला ऊर्मि लेशपंक्तय:, ता: बिभर्तीति तथोक्त:। मालाशब्दस्य दृष्टकादित्वात् तदन्तस्य चेति ह्रस्व:।

(२७) ह्रदेति। हे ह्रद! हृदय हरे मनोहरे ते तव

अपि षट्चरणगाञ्चालघ्रुणोद्यातुरीभिः
प्रतिलहरि वितीर्णाः काचिदस्याश्च सख्याः॥

कथं मदत्नोत्तरस्तूर्णीं तिष्ठति। मन्ये स्नातुमवतीर्णैव अगाधे पयसि मग्नेत्यभिप्रायवेदनाद्विरमति। विलोक्य। सावेगम्। वयस्य! महान् प्रमादः। सत्यं मग्नेव प्रयसि प्रेयसी। बोधयति साक्षात्।

दूरं या विषिमा वियति धवला हारलतिका
पुरा माद्यां बध्वा कुवलयदृशो यामद्द मताम्।
यया प्राप्तं तस्याः किमपि मदनङ्गानलरुजा
विपाण्डुप्रोत्तुङ्गस्तनकलशदोलायितसुखम्॥

पुनर्विलोक्य। ससभ्रमम्। वयस्य! न सा मग्ना इदानीं तु मज्जति।

एतत्तदिन्दुपरिपन्थि महेन्द्रनील
सौन्दर्य्यचौर्य्यचतुरैरलकैः सनाथम्।
आकण्ठमग्नवपुषो हरिणेक्षणाया
हा हन्त पश्य मुखमम्बुनि कम्पमानम्॥

---

अस्मिन् पयसि निम्ननाभीह्रदा मे सहचरी स्नातुकामा अवतीर्णा इति प्रश्नार्थकः। काकुः। षट्चरणगाञ्चा चञ्चुरोचातुरीभिः प्रतिलहरि अन्याः अन्यादृशः काचित् शय्याश्च रीति विशेषाश्चेत्यर्थः। तरङ्गिताख्या इति भावः। तरङ्गितलक्षणन्तु कल्लोल इव यः कान्तिविच्छेदस्तत्-तरङ्गितं इति। अपि वितीर्णाः दत्तावा इति प्रश्नः अथवा। स्नातु-कामा अवतीर्णा अवततार इत्यर्थः। तत्र युक्तिमाह। अपि किञ्चे-त्यर्थः। प्रति लहरि अन्याः काचित् शय्याश्च दत्ताः। यद्वा यया अपि दत्ताश्च इति योजना। प्रथमान्वये सन्देहपूर्व्वकः प्रश्नः उत्तरस्तु निर्द्धारपूर्व्वकः प्रश्न इति भेदः।

उर्व० । प्रिये ! मा भैषीः । अयमहं मुद्धरामि ।

कल० । स्वगतं । हन्त सर्व्वत्र सदृश वस्तुषु भ्रमति वयस्यः

प्रकाशं । सखे ! ननु चक्षुस्ते कथंपथमवगाहते ।

मारु० । ज्ञानिनोऽपि भ्रम एव । निरूप्य । सविषादं ।

एष व्योमनि मानसं जिगमिषुर्हंसालि रुड्डीयते
चञ्च्वग्रैश्चरणैश्च विद्रुम सवर्णैः छिन्ना न मुक्तावलिः ।
एतच्चाम्बुनि वीचि वेगतरलं कूजद्भिरिन्दिन्दिरै
र्नालीकं न पुनर्घनालक कुलं वक्त्रं चकोरी दृशः ॥(२८)॥

---

(२८) एष इति । व्योमनि एषः हारलतिकात्वेन पुरो दृश्यमानः । विद्रुमवर्णैः चञ्च्वग्रैः चरणैश्च हेतुभिः । हंसालिः हंस-पङ्क्तिः अन्यथा लोहितचञ्चुचरणाभावादिति भावः । स इति कर्त्ता गम्यमानत्वादप्रयोगः । मानसं सरो विशेषं जिगमिषुः गन्तु-मिच्छुः सन् उड्डीयते उत्पतति । छिन्ना विच्छिन्ना मुक्तावलिः न । अम्बुनि जले एतत् अलकसनाथ कम्पमानमुखत्वेन दृश्यमानं च । कूजद्भिः शब्दं कुर्व्वद्भिः इन्दिन्दिरैः भ्रमरैः हेतुभिः वीचिवेगतरलं नालीकं सरोरुहम् । अलकसनाथ मुखत्वे शब्दाभावादिति भावः । सरोरुहत्वे कम्पमानत्वे को हेतुरित्यत उक्तम् । वीचिवेग तरलमिति । घनं सान्द्रं अलककुलं यस्मिन् यस्य वा तत् तथोक्तम् । चकोरीदृ[शः] वक्त्रं पुनर्न । अत्र तत्र कथनद्वारा हारत्वेन मुखत्वेन च भ्रान्ति[नि]वारणात् भ्रान्तापह्नुती तयोश्च लोहितचञ्चुचरणैः कूजद्भि-रिन्दिन्दिरैरिति युक्तिपूर्व्वकत्वात् । हेत्वपह्नुतिभेदावलङ्कारौ । त[दुक्त]-न्तु । भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे इति । स एव युक्ति-पूर्व्वश्चेदुच्यते हेत्वपह्नुतिरिति च । हेत्वपह्नुतिद्वयभेदयोश्च परस्प[र]-नैरपेक्ष्यात् संसृष्टिः । हेत्वपह्नुतिभेदत्वोक्तिस्तु । तदेव युक्तिपूर्व[क]

तदन्यतः पश्य। परिक्रम्य। सहर्षं।

प्रथमजलधरधारासेकोच्छ्वसित सुरभिकटकस्थला-लङ्कारस्य तमालतरोः।

मदमुकुलितापाङ्गे विभ्रद्दृशौ मधु पिङ्गले
परिसर झरीझात्कारेषु स्वयं निभृत स्रुतिः।
धवल पृथुले दन्ते युग्मा लतां विनिवेशयन्
गिरिरिव गिरिं रुन्धन् गन्धद्विपोऽयमुदीक्षते ॥

यावदेनं पृच्छामि। उपसृत्य।

करिपते! कथय क्व मम प्रिया
यदि दृशो स्तव मार्गमुपागता।
गिरितटीषु झरीषु वनीषु वा
कुररिकेव वतार्त्त विलापिनी ॥

सहर्षं। एष सर्णं स्तम्भितः शृणोति सादरं मे वाचः। परित-स्ताण्डवित नीलकण्ठ षण्डेन स्तनितगम्भीरेण गर्जितेन प्रति वक्ति च। सस्मितं। गजराज! किमात्थ कानि तस्या लक्षणानीति। तर्हि श्रूयताम्।

त्वत् कुम्भोपम विभ्रमः कुचभरस्त्वद्दानखिलं गतं
त्वच्छुण्डासम मूरु काण्ड मपि तु स्पृष्टं न कार्कश्यतः।
घ्राणोसीढ़ सुवर्णदर्पणतलस्वच्छे कपोले सखे!
त्वद्दन्त प्रथम प्ररोह धवला जागर्त्ति काचिच्छविः ॥

निर्वर्ण्य। सविषादं। कथं मुकुलितनयनं उदास्ते ममा-

---

दिति वचनेन युक्तिपूर्विका युक्तापह्नुतिः छेकापह्नुतिरिति मन्यमान-त्वात्। प्रकृते भ्रान्त्यापह्नुत्योर्युक्तिपूर्वकत्वान्न दूषणमन्तव्यम्।

भ्यर्थितम्। हन्त तदेतद्गज विमीलितं नाम। सनिर्वेदं।
अहो दुर्ललितः खलजनः।

प्रणयवचनमर्थिभिः प्रयुक्तं
यदयमहो न शृणोति दुर्मदान्धः।
अथ कथमपि चेत् करोति कर्णौ
नयननिमीलितमुत्तरं विधत्ते॥

तदन्य मभ्यर्थये। पदान्तरे स्थित्वा। एष प्रकट दृष्टापराधः
प्रणय कोपदुरुपसर्पां प्रेयसी मनुवर्त्तते मतङ्गज तरुणः।
सविस्मितं। इयं खलु।

मानस्ते प्रणयार्पितामपि मुहुर्मां सक्ती पल्लवान्
कुम्भस्पर्शं परं निरस्यति करं भूत् कुर्वती शङ्कया।
प्रत्याख्याति पराङ्मुखी नयनयो र्हस्ताग्र कण्डूयनं
पत्युर्नानुनयं प्रतीच्छति वशा मानस्य याता वशम्॥(२९)

अतो नोचितमत्र प्रार्थन कदर्थनं। अन्यतो दृष्ट्वा। एतत्
पारिप्लव नयन प्रभेन्दीवरित हरिमुखं हरिणी वृन्दं इतः
प्रतिष्ठते। तदस्मिन्नन्यतमां हरिणीं प्रक्ष्यामि। स्त्रियः खलु
स्त्रीवृत्तान्त परिज्ञाने सविशेष माग्रहिण्यः।

विलोक्य। कथं प्रचलत्यपि यूथे मत्प्रार्थित श्रवणाय
एका विलम्बते।

---

(२९) मानः कोपविशेषः। उक्तञ्च स्त्रीणामीर्ष्याकृतः कोपः
मानोऽन्यासङ्गिनि प्रिये इति हेमचन्द्रेण तु ईर्ष्या मानः स्त्रीणामेव
इति। तस्य वशं याता वशा करिणी पत्युः करिणः अनुनयं न प्रती-
च्छतीत्यन्वयः। तथाच सर्वं मृगजातिरपि मानवशमा मानिनीव
मानचेष्टाः करोतीति भावः।

एषा पुरः प्रणयिना परिभुज्य कच्छं
प्रेम प्रसारितदृशा परिपाल्यमाना ।
आस्ते स्तनन्धय विवल्गितदत्तदृष्टि-
राक्रान्तमर्करितशैलतटा कुरङ्गी ॥ (२०) ॥

निर्वर्ण्य । अति हि नाम लोभनीयमेतासां कातरस्निग्ध प्रेक्षितं । मन्ये अत्र क्वचिद्गिरि कन्दर लता मन्दिरेषु सन्निहिता पाठयति पक्ष्मलाक्षी । सनिश्वयं ।

एणीनां चकित विलोकितोपदेशे
वामाक्षी प्रभवति सैव मल्लिका मे ।
शिष्यस्थं गुणमवलोक्य लोक कान्तं
विद्वद्भिर्गुरुरपि तद्गुणो हि कल्प्यः ॥

पृच्छामि तावत् ।

सारङ्गि ! हंस गमनोन्मुखि ! जीवनाथा
सा मे विभूषयति सम्प्रति कं प्रदेशम् ।
यो पादिशत्स्म तव कातरकातरेक्षा
माचार्यकीं नयन चंक्रमचातुरीणाम् ॥

कथमदत्तोत्तरा सह तर्णकैः (२१) प्रस्थितैव । किमनादर-कारणमस्याः किं प्रियया सह सङ्घर्षः । सवितर्कं ।

---

( २० ) स्तनन्धयस्य शिशोः विवल्गिते गमनाऽभ्यासवप्रयुक्ते किञ्चिदुपप्लवनरूपे गमनविशेषे दत्ता दृष्टि र्यया सा तथोक्ता इति कुरङ्गी विशेषणम् ।

( २१ ) तर्णकैः सह वत्सतरैः शावकमित्यर्थः । सद्योजातस्तु तर्णक इत्यमरः ।

लब्ध्वा कियन्तमपि नेत्र गुणं प्रियायाः
स्पर्द्धां तथैव हरिणाः कथमादधीरन् ।

विमृश्य । सनिश्चयं ।

स्पष्टं तदेतदथवा भजते यदस्याः
वक्त्रद्विषं हिमकरं कुलमौलिरेषां ॥ (२२) ॥
उपालभे तावत् । भोः भोः !

हरिणवंश्याः ! मा गर्वन्तु (२३) भवन्तो मल्लिकायाः लोचन सौभाग्य सर्वस्व हारिणो वयमिति ।

कातर्थ्यं पक्ष्मलता वैपुल्यं स्निग्धतेति तन्वङ्ग्याः ।
ग्रामाः केऽपि विशेषा दुष्प्रापा विभ्रमास्तु नाभ्यस्ताः ॥

कल । सकरुणम् । हन्त परां काष्ठा (२४) मधितिष्ठति वयस्यः उन्मादस्य । यत् तिरश्चोऽपि प्रार्थयते अचेतनानप्या·

---

(२२) अथवा तदेतत् स्पर्द्धाचरणमित्यर्थः। स्पष्टं शङ्काऽनास्पदम् । यत् यस्मात् एषां हरिणानां कुलमौलिः कुलप्रधानो हरिणः कर्त्ता अस्याः प्रियायाः वक्त्रद्विषं हिमकरं चन्द्रं भजते । स्वकुलगुरुपरिग्रह· द्वेषि वक्त्रशालित्वेन प्रियया सह हरिणानां स्पर्द्धाविधानं निःशङ्कमेव इति भावः ।

( २३ ) मा गर्व्वन्तु मा दृप्यन्तु इत्यर्थः । कर्व्व खर्व्व गर्व्व दर्पे इति धातोः कर्त्तरि परस्मैपदाल्लोट् । भवन्त इति कर्त्तृपादानात् प्रथमपुरुष बहुवचनम् । स्वतम् । शेषे प्रथमः इत्यनेन मध्यमोत्तमयो· रविषये प्रथमपुरुषत्वविधानात् ।

( २४ ) परां काष्ठामिति । परां दूरां श्रेष्ठान्यदूरस्थेष्वेताह परः स्याद्दाच्यलिङ्गक इति नानार्थरत्नमाला । उन्मादस्य चित्तविभ्रमस्य काष्ठां दिशम् । अतिदीर्घमुन्मादप्रकारमित्यर्थः । अथवा परां काष्ठां अत्युत्तमप्रकर्षमित्यर्थः । काष्ठा द्रव्यां कालभेदे प्रकर्षे दिशि सान्नि चेति नानार्थरत्नमाला ।

भाषते। हा कष्टमेतावती मम मारुतप्रत्याशा। धिङ् नाम मम जीवितं यदेवं गते प्रियसुहृदि स्वयमेव न भिद्यते।

सोपालम्भम्।

यस्य त्वमेव परमाप्तमभूरमुष्य:
स्वेभ्योऽपि यस्य तव सम्मत आत्मनोऽपि।
उन्मादलङ्घितमताविति नाम तस्मिन्
हा मूढजीवित! कियच्चिरमासितव्यम्॥

मारुतं विलोक्य। हन्त दयनीयमेतत्।

मत्वा मृगान् प्रणयतो विमुखान् समन्यु
निःश्वस्य दीर्घमपसन्नशरीर (२५) मास्ते।
निर्वेदशोकपरितापपरिप्लुतेन (२६)
वक्त्रेण बाष्पकलदीनविलोचनेन॥

आकाशे (२७) साक्रन्दम्।

कथमसि मल्लिके! करुणाशा विधुरा किमपि
प्रियसखि। पश्य पश्य घनबाष्पमिदं वदनं।
कमल इवालिपङ्क्तिरपतद्दत यत्र पुरा

---

(२५) समन्युः। सशोकः। अपसन्नं स्रस्तीभूतं शरीरं यस्मिन् कर्म्मणि तद्यथा भवति तथा।

(२६) निर्वेदः स्वात्मावमाननम्। शोकः दुःखातिभूमिः। परितापः पश्चात्तापश्च एभिः परिप्लुतेन युक्तेनेत्यर्थः।

(२७) आकाशे इति। पात्रं विना वक्ष्यमाणत्वात् आकाशे इत्युक्तिः। तल्लक्षणन्तु। किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितं इति।

विकसित मन्दमुग्धमधुरा त्वदपाङ्गततिः ॥ (३८)

मारु । हा किं करोमि न दृश्यते प्रियतमा । यथैवं भवतु पुनरित्यन्विच्छामि । श्रूयते हि अनिर्वेदः परमो हेतुः श्रेयसे इति । पदान्तरं गत्वा सकौतुकम् ।

इदं जम्बूकुञ्जस्खलितजलझात्कारलहरी
गभीरायाः सिन्धोर्मुदितस्य विहगध्वानिनि तटे ।
क्रमोद्गाढानङ्गज्वरविधुरकर्णाटयुवती
कपोलापाण्डु (३९) द्रागदलति रुचिरं केतकदलम् ॥

प्राकृतम् ।

इदमभिनवोद्भेदस्वच्छामलद्युति केतकी-
दलमविमिलाद्रोणिक्रोडस्पन्दान्धमधुव्रतम् ।
स्मरयति पुरा पश्यन्त्या मां त्रिनीलकनीनिका
लुलितलुलितप्रान्तां वामभ्रुवो विमलां दृशम् ॥

तदेनं विशिष्ट गन्धप्रियं (४०) भृङ्गराजं पृच्छामि । अभिमुखं स्थित्वा ।

---

(३८) विकसित मन्द मुग्ध मधुरा । विकसिता विषयविशेष-व्याहिणी विकासितं यद्विषये विशेषमवगाहते इति वचनात् । मन्दा मन्थरा मुग्धा सव्याजगर्भस्वभावा मधुरा सन्तापहरा चेत्यर्थः । कटाक्षैः-क्षेपगर्भैस्तु सम्भोगौत्सुक्यभावना शीतली क्रियते तापो येन तन्मधुरं स्मृतं इति वचनात् । अपाङ्गततिः कटाक्षपङ्क्तिरित्यर्थः ।

(३९) क्रमेणोद्गाढ दृढीभूतः अनङ्गज्वरः यस्याः सा च सा विधुरकर्णाटयुवती च तस्याः कपोलवत् आपाण्डु धवलमित्यर्थः ।

(४०) विशिष्ट गन्धप्रियं उत्कृष्टगन्धाभिलाषमित्यर्थः । अत एव सर्वोत्कृष्टगन्धमल्लिकावदनमवश्यमासादितमेव स्यादितिभावगर्भितं विशेषणम् ।

मधुकर ! मदिराक्षी मे दृष्टा विपिने त्वया भ्रमता
अपि परिजातसौरभमवनिजुषाप्राप्तमाननस्याति।
(४१) कर्णं दत्त्वा। कथमनाद्रियमाणः सगर्वं गायति। भवतु
तथा प्रिया पाक्षारणमेन मनुयामि। पदान्तरे स्थित्वा।
कथमत्र रक्तकदम्बे प्रफुल्लेष्वपि पुष्पस्तवकेषु पल्लवमधिशेते-
ऽन्यो भृङ्गयुवा। निर्वर्ण्य सानुकम्पम्।

न पिबति सविधेऽपि स्यन्दमानं मधूलिं
न मिलति सह यूथ्यैर्नो कलं झङ्करोति।
न च मरुदुपनीते मोदिते पुष्पगन्धैः
तदयमपि तपस्वी कान्तया विप्रयुक्तः॥ (४२)॥

नैतं प्रवक्ष्यामि। निर्वर्ण्य। सहर्षम्।
इयमनतिदूरवर्त्तिनः कदल्यो कुसुमादागतैव विरह-
पीड़िताङ्गी भृङ्गी।

---

(४१) मधुकरेति। हे मधुकर ! विपिने भ्रमता त्वया मे मदिराक्षी दृष्टा इति स्वरविकारः। अवलोकितावेति प्रश्नः। कदाचिद् यां काञ्चिदवलोक्य तस्यां एतद्भ्रमेण दृष्टेति न प्रतिवक्तव्यमित्याशयेन तदीयमनितरसाधारणं लक्षणमपि पृच्छति। अपीति। अवनिजुषा भूलोकस्थेन त्वया आननस्यात् तन्मुखसंसर्गाद्धेतोः पारिजातसौरभं स्वर्लोकीयनन्दनवनस्य कल्पद्रुमसार्वभौमकुसुमसौगन्ध्यं कच्चित् अपि प्राप्तं आसादितं वा इति प्रश्नः।

(४२) तत् तस्मात् उक्तप्रकारेण विषयेषु अरतिमत्त्वादिति भावः। तपस्वी शोच्यः अयञ्च भ्रमरोऽपि कान्तया विप्रयुक्तः विरहितः। विषयनिवृत्तिस्तपसानाय इत्यादिना विषयेष्वरतेः अवस्थाविशेषत्वेन विरहिष्वपि संवलयत्वादिति भावः।

स्निह्यति हृष्यति प्रसभं चुम्बति गायत्यनङ्गपरिमा ।
प्रत्यागतां चिरेण प्राप्य प्रणयाकुलां दयिताम् ॥

दृष्ट्वा चैतत् पूर्वेद्युर्निशावृत्तान्तः स्मर्यते । तथाहि तस्मिन् समये ।

पाल्लवं तल्पम (४३) मास्थिते मयि प्रापदिन्दुवदना मदन्तिकम्

पुनः करुणमभिनीय । साक्रन्दम् ।

हा हतोऽस्मि ननु तत्र पश्यन्ती नीलनीरजदृशी न्यमीलयत् ॥

कल । हा धिगियन्तं

समयं उन्मादतिरोहितः संस्कारः सदृशदर्शनादुद्बुद्धः ।

मारु । धिङ् मां प्रमादिनं यदुन्मत्त इव विस्मृत्य तादृशं कृतान्तनैष्ठुर्यं (४४) काननभ्रमणेन कालं क्षिपामि।

आकाशे । हा प्रिये मल्लिके ! कथं मया विना स्वर्गं मारूढासि ।

विपुल जघने मन्दं याहि क्षणं त्रिदशालये
त्रिदशसरितः कूले यावन् मयाप्यनुधाव्यते ।
पदनलिनयोः केलीयान प्रकार मधीयतां
विमललहरी लोला वेधी रथा द्विजजातयः ॥ (४५)

---

(४३) पाल्लवं तल्पं किसलय तल्पमित्यर्थः । तल्पं कुट्टिमे तल्पं चन्द्रशालेऽप्येति नानार्थ रत्नमाला ।

(४४) तादृशं कृतान्तस्य दैवस्य नैष्ठुर्यं क्रौर्यं मरण रूप मित्यर्थः । कृतान्तो यमसिद्धान्त दैवा कुशल कर्मसु इत्यमरः ।

(४५) विपुलजघने इति । हे विपुलजघने ! इति सम्बुद्धिः । वक्ष्यमाण व्यापारान्यथाकरणे तव जघनखेदः सम्भावित इत्यत्र गर्भा ।

तत्र च ।

तरन्तो माध्व्याः कनककमलक्षोदभिदि जले
मरन्दे मन्दारद्रुम सुमनसां मन्नवपुषः ।
सलीलं पौलोमी कुटिल चिकुरान्दोलनपराः
शनैः सेविष्यन्ते सुमुखि ! भवतीं स्वर्गपवनाः ॥ (४६)

सवितर्कम् । इदन्तु विशिष्टगुणवत्त्वमपि कथितमिष्टाय ।
तदुपदिशामि । आकाशे । अथ मल्लिके सखावितनन्दन-
वनोपकण्ठ सञ्चारां भवतीं किञ्चिद्वदामि ।

कल्पद्रुमावलि विलोकनकौतुकेन
मुग्धे ! तदुत्तमय मा मधुरं मुखाब्जम् ।
जिघ्रासवः सुरभिनिश्वसितं सहेलं
निधूतपुष्पमलयो द्रुतमापतेयुः ॥

---

सिद्धाश्रये सिद्धचरितः कुञ्जे विनोद सम्पत्तिवृत्तकमेतत् । अथ मन्दं
याहि । अतिमनोहरायां देवचरिति दत्तदृष्टिः स्खलन भार सौख्या
विशेषेण मन्दं व्रजेति भावः । एवं करणे तव महत् सेवाच सङ्कटम
इत्याह । यावत् मयापि अनुधाव्यते तावत् वेधसः प्रधानः रथाः वा-
हनभूताः विमलजलदरीषु लोलाः आकल्पाः विहरन्त्यः हिमजातयः
हंसाः इत्यर्थः । पदनालिकयोः स्पर्द्धाकु करोरुकयोः चकासात्
केलीयान प्रकारं कर्म्म अधीयताम् । स्ववाहनानां केलीयान प्रकार-
शिक्षणेन वेधावरुध्येदिति भावः ।

(४६) तरन्त इति । अत्र तरन्तः मन्नवपुषः आन्दोलन पराः इति
विशेषण त्रयेण क्रमात् शैत्य सौरभ्य मान्द्यात्मयोगुणाः । प्रति
पादिताः इति बोध्यम् ।

कल । अयमन्यः प्रकार उन्मादस्य ।

मारु । प्रिये ! अदृष्ट वरे देवि कथमेकाकिनी प्रति-पालयेयमिति मा मनसि खेदः कार्य्यः ।

वलितवदनं भूयो भूयो महागमनोचिते
प्रहितनयनां मार्गे साधादमामिव तस्थुषीम् ।
तत इत उपेत्यारात् प्रीत्यन्न ताकुलचेतसः
सुरयुवतयो द्रक्ष्यन्ति त्वां निमेष मुषा दृशा ॥

वक्ष्यन्ति च ।

सखि ! कथय कुतस्त्वं कस्य कान्तासि मा मा
बिभिहि ननु वयन्ते केलिसख्यः स्म सर्व्वाः ।
अथ सहभुव एतान् कल्पवृक्षान् दिदृक्षुः
स्वयमिह चरसि श्रीः सोदरी स्तकयास्मान् ॥

किम्बहुना एवमादि भूयो भूयः कौतुकेन पृच्छन्तीषु तासु लज्जा गृहीतकण्ठा यावत् किञ्चिदारभसे वक्तु तावदहं झटित्यागत्य तासां सम्यगुत्तरयामि । परितो विलोक्य । सकम्पम् । कथमिदं भूपृष्ठमात्रगोचरं वपुर्विहाय प्रियतमा समीपं गमिष्यामि ।

कल । सावेगम् । हन्त किमिदमारभ्यते । ननु भो हतविधे ! किं मन्यसे । कीदृशमिदमुन्मादं परिणमयसि । साञ्जलिबन्धं । भगवन् कुसुमायुध ! भूयोऽपि प्राक्तनमुन्मादं आवर्त्तयस्व । यत्र वने वने अन्वेषमाणेन प्रियवयस्येन नैतादृश मारब्धम् ।

मारु । कर्णं दत्त्वा । सहर्षं । दृयन्तं समयं प्रियतमां

विहाय प्रयाते (४७) मय्य प्रकुप्यन् देवो मकरकेतन एव मदनुकूले प्रवर्त्तते । अयं हि ।

आस्फालयति मुहुर्मुहुरारोपित चण्ड मौर्वि कोदण्डम् ।
आकर्ण्यते हि तात्क ष्टङ्कारो मुखरयन् ककुभः ॥ (४८)

कल । हन्त मधुकर झङ्कारं मौर्वि टङ्कारयति ।

भाव । । यावदेनं त्वरयामि । सप्रार्थनं ।

तं बाण मुदर निषङ्ग मुखादनङ्ग
पश्चाऽपि वीक्ष्य यमवैष्यऽविकुण्ठ धारम् ।
तेनैव सत्वर मसून् जहि मे दयालो
न द्विःशरं धनुषि सन्दधते हि शूराः ॥ (४९)

स्मरणमभिनीय । हन्त लोकान्तरं यियासता मया मया पृष्टः प्रियमित्रं कलकण्ठः । हा सखे कलकण्ठ ! क्व मां विहाय गतोऽसि ।

कल । सबाष्पं । सखे !

---

(४७) प्रयाते जीवमानायेत्यर्थः ।

(४८) अयं हीति । अयं हि मन्मोहि आरोपितचण्ड मौर्वि कोदण्डं आस्फालयति । अत्र युक्तिमाह । हि यस्मात् ककुभः मुखरयन् तात्कः कोदण्डः टङ्कारः आकर्ण्यते इति योजना ।

(४९) तमिति । हे अनङ्ग ! तं बाणं निषङ्ग मुखात् उद्धर पश्चापि बाणानितिशेषः । वीक्ष्य परिशोध्य यं बाणं कर्म्म अविकुण्ठा क्रियानिपुणा धारा निशितप्रान्तः यस्य तं तथाभूतं अवैषि जानासि तेनैव तथोद्धृत बाणेनैव हे दयालो ! मे असून् सत्वरं जहि । तथाहि शूराः द्विःशरं न सन्दधतेहि इत्यन्वयः । सामान्येन विशेष समर्थनरूपोऽर्थान्तरन्यासः उक्तिरर्थान्तरन्यासः स्यात् सामान्य विशेषयोरिति लक्षणात् ।

नाहं गतोऽस्मि भवत चरणाज पार्श्वात् ।

मारु । अनाकर्णितेन । शृणु ममेदं पश्चिमं वचनम्

इति वदन्नेव मूर्च्छां नाटयति ।

माल । सत्वरमुपसृत्य ।

शेषं वचः कथय मा विरमार्द्र मुक्ता ।

निर्वर्ण्य । सावेगम् ।

भक्तां कथं नु खलु मामवधूय दीनां

निःसङ्ग लोकमपरं प्रति यास्यकाण्डे ॥ (५०) ॥

इति धारयन् ।

हा प्रिय वयस्य मारुत ! पश्य मामनाथं हा कृशस मकरलाञ्छन ! कथं प्रार्थितोऽहमिति प्राणान् हरसि वयस्यस्य । घोर किं त्वमिव त्वत् सायका अप्यदृश्या एव ये अलक्षित पतना एव व्यापादयन्ति शरीरिणः । शीतलोपचारं नाटयन् । निर्वर्ण्य । हा हतोऽस्मि मन्दभाग्यः । अद्यापि निर्विकारं वदनम् । सवाष्पम् ।

एतदेव तदराल कुन्तलं पेशल स्मितमुदार भाषितम् ।
पुण्डरीकदल दीर्घलोचनं पूर्णचन्द्र रमणीय माननम् ॥

परितो विलोक्य । हा भूधर नितम्ब वासिन्यो वनदेवताः ! परित्रायध्वं परित्रायध्वम् ।

(५१) विरमत्यसावहह विश्वमङ्गलं

कलकण्ठ जीवित निबन्धनं जनः ।

---

(५०) अकाण्डे । अनवसरे इत्यर्थः ।

(५१) कलकण्ठ जीवितस्य निबन्धनं बन्धक इत्यर्थः । जनः शि-

य मलालयन् ललितमुग्धमल्लिका
किलकिञ्चित स्मित विलोकितादयः ॥

सखे! मारुत! दिवं गतेन त्वया न चिरं प्रतिपाल्योऽस्मि।

माहं विलम्ब कणिकामपि नाथ कुर्य्यां
जानामि ते पृथगवस्थिति कातरत्वम् ।
स्वर्गं गतोऽपि बहु मल्लिकया समेतो-
ऽप्युत्कण्ठसे नु कलकण्ठ विनाकृतः किम् ॥ (५२)

अमर लोक ललाम भूतयो युवयो रस्ति च मयाप्युपयोगः ।

ग्रथ्नीया मलकार्पणोचित गुणां कल्पद्रु सूनैः स्रजं
लीला साधन(५३)मास्तृणीय तलिमं बालैश्च तत्पल्लवैः ।

---

रमति । निबन्धन नाम्नो बहु नामः स्फुट इति भावः । ललित मुग्ध मल्लिका किलकिञ्चित स्मित विलोकितादयः । रोषाश्रु हर्षभीत्यादेः सङ्करः किलकिञ्चितं तच्च । स्मितं मन्दहसितञ्च विलोकितञ्च इति द्वन्द्वः । ललितानि चारूणि ( ललितं चारुणि त्रिषु इति नानार्थ रत्नमाला ) मुग्धानि नूतनानि (मुग्धः सौम्ये नवे मूढ़े इति नानार्थ रत्नमाला)। यानि मल्लिकायाः किलकिञ्चित स्मित विलोकितानि तानि आदीनि येषां ते तथोक्ताः आदिपदेन भ्रूभङ्गादयो गृह्यन्ते । मल्लिकायाः हाव-विशेषाः इत्यर्थः ।

(५२) कलकण्ठेन विनाकृतः विरहितः सन् किंनु वस्तु इत्यर्थः कर्म्म । उत्कण्ठसे अभिलषसि सर्ववस्तुनि च विमुखोऽसीतिभावः ।

( ५३ ) आः इति सन्तापे । आस्तु सन्तापकोपयोरिति नानार्थ रत्नमाला । बालैः नतपल्लवैः कल्प किसलयैः लीलासाधनं युवयोः क्रीड़ोपयोगि हणीय तलिमञ्च । गृह्णीयामित्यनुषङ्गः ।

प्रत्यग्रोपहृतेन मन्दपवनं मन्दाकिनी जन्मना
स्वर्णाम्भो रुहिणी दलेन मृदुना सञ्चारयेयं सखे ! ॥

सस्नेहं परिरभ्य ।

विकटमणिकवाट श्रीमदेतन्मदङ्गै
र्मुहुरपि परिरब्धं साम्प्रु संहत्य नीतम् ।
विरहयति न वक्षो मल्लिकाप्रेमदत्त
स्तनसुरतरुदाम्नः (५४) सान्द्रमद्यापि गन्धम् ॥

हा जननयनचन्द्र ! हा गौरीप्रसादलब्ध ! हा कुलतन्तो ! हा कालकण्ठजीवित ! हा मल्लिकाविलासप्रबन्धलालित !(५५)

इत्यविषादवर्णं विलपन् मूर्च्छति ।

ततः प्रविशति वाष्पायमाणवदना नवमालिका
रमयन्तिका कालिन्दी च ।

सर्व्वाः । हा वलह सही भणि (५६) मल्लिए देहि णो

---

(५४) विकटेति । विकटं मणिकवाटवत् विशाल रत्नकवाटवत् श्रीमत् शोभाशालि । विकटः पृथुले रम्ये विशाल विकरालयोरिति नानार्थ रत्नमाला । साम्प्रु यथा तथा मदङ्गैः संहत्य परस्परं संबध्य मुहुः परिरब्धं नीतं प्रापितं वक्षः मारुतोरः कर्त्तृ । मल्लिकया प्रेम्णा दत्तं यत्स्तन सुरतरुदाम कुचवर्त्ति कल्पद्रुममाल्यं तस्य सान्द्रं गन्धं अद्यापि न विरहयति न त्यजति इत्यन्वयः ।

(५५) मल्लिकायाः विलासानां लीलादीनां प्रबन्धेन कल्पनेन लालितविनोदित इति सम्बुद्धिः ।

(५६) वल्लहसही भणे । वल्लभः सखीजनो यस्याः तथा भूते इति सम्बुद्धिः ।

वअणं सुन्दरि विहडन्त चम्पअदलसुरहिरमणिज्जा विल-
साणं वि हिअअं मअविआरा (५७) तारिसी तुह तणु-
लच्छोकीरिसस्स हिअदुव्वि वा अस्स भाअणं णासि । हा
महाभाअ माहअ ! कहं णु सहेसि तुमं वि मअविआए विओ
अम । जाए किदे कण्ठु च्छेद साहसे उच्छाहो किदो ।

नवमा । हा असोअ णवमालिआ सुअविरहे कीस मं
उवेक्खसि । चिट्ठउ दाव णोमालिआ तुह जीविअ णिव-
न्धण्स्स सविह सुक्क कारणाअन्दस्स माहअस्स वा दंसणं
देहि । संस्कृतमाश्रित्य ।

---

(५७) विलआणंवि हिअअ वम्महविआरा । (वनितानामपि हृदयमन्मथ विकारा) हृदः मन्मथविकारः रिरिंसा यया इति विग्रहः । लोकेहि प्रायशः स्त्रीभिः पुरुषाणामेव मन्मथविकारोत्पादनं दृश्यरम् । अत्र स्त्रीणां तयेदमप्रसिद्धं स्त्रीणामपि मन्मथ विकारोत्-पादकत्वमस्यां प्रतिपादित मित्यतोऽवाङ्मनसगोचरोऽस्याः शोभाविशेष इति फलति । (न च) पुरुषेण पुरुषाणामिव स्त्रिया स्त्रीणां मन्मथ विकारोत्पत्तेः । यकारादि धात्वर्थप्रयोजकत्वा भावेन विफलत्वात् अनानुभविकत्वाच्च असमञ्जसोऽयमुपन्यास इति शङ्क्यम् । स्त्रिया स्त्रीणां मन्मथविकारोत्पत्तेः तदुत्पन्नया कार्य विशेषसम्भवस्य च मानिनी जनरहस्यत्वेन नपुंसामनुभव पथ मवगाहते । वस्तुतस्तु पश्यतैव साक्षादवगम्यते यदाङ्कुरायुर्वेदिनः । यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन । मुञ्चतः शुक्र मन्योन्यं मनस्थिस्तत्र जायते इति । अत प्रति पादितयोः कारण कार्य्ययोर्द्वयन्तौ परस्परस्त्रकृताऽनस्थि प्रसवयो रन्यतरस्य कार्य्यभूतामस्थि प्रसवस्य प्रसिद्धत्वेन कार्य्य विषया कारण समर्थनमपि अन्वयव्यतिरेकाभ्यां सुशक्यम् । अत्रापि सन्दिग्धतान्तु स पृच्छया कतम प्रतिपन्नमेव जीवातुरित्यवसुपर्य्युपरि वक्तव्योबमेन ।

उपसर्पन्ति मारुतकलहंसौ दृष्ट्वा । सकरुणाक्रन्दम् । एदे दव्वोलिखुमणाविअ कप्पतरुआ वेरहि महाभाआ । उरोऽवघो ताड्य पतन्ति ।

नवमालिका कालिन्द्यौ । मारुतकलहंसौ दृष्ट्वा । सहि रमयन्तिए ! मुच्छिदा एव्व एदे ता जलधर वारिकण सारद्दसिच ह्निका लदा पल्लवपिच्छेण वीजेहि ।

रम । सवाष्पं तथा करोति

कल । प्रबुध्य सविषादम् । हा धिक् ! वयस्य मनासाद्य प्रतिनिवृत्तोऽस्मि विलोक्य । सभयम् । हन्त एता अप्यागताः । प्रकाशम् । हा सखि ! नवमालिके ! हा सखि ! कालिन्दि ! पश्यत मारुतस्यावस्थाम् । एष हि ।

अन्वेषमाणो विपिने पृच्छन् खगमृगद्रुमान् ।
अलब्ध्वा मल्लिकां कान्तां श्रान्तः शेते सुहृन्मम ॥

रमयन्तिकां विलोक्य । एषा तु मुग्धा लज्जा शोकपरवशा निःशब्दं रोदिति । सनिर्वेदम् ।

इयं हि दुर्दान्त कृतान्तलीढं
रसोपमाना रमयन्तिका माम् ।
लतेव दावानल दह्यमान
मुपघ्नमाश्रित्य विशोषमेति ॥

मारुतं विलोक्य । हन्त निर्व्विकारमेव वयस्यस्य वदनम् । सत्वरमुत्थाय । वयस्य ! अयमहमागच्छामि । परिक्रम्य अधोविलोक्य ।

अयमनयमग्राह्यतलो गिरिनितम्ब प्रपातः ।

अस्मिन् गजवर्म धरेगण्डोपलमण्डलेख्य पुटे ॥
मत्युगतिमनुगच्छन् निर्झरपातं पतामि भृगुदेशे (६०)

सर्व्वाः। सकम्प्रमनुपसृत्य कण्ठकं पृष्ठतः कृत्वा। अच्चो पुढमं पड़िसुमामो।

नव। सहि मल्लिए! मन्दभाग्ग माहम्म अण्णर्ण्णा तरेवि तुह्माणं परिप्परिन्मा भविस्सामि। इति वहितुमिच्छति।

काल। सर्वतो विलोक्य। सकम्प्रमाक्रन्द्य। नवमालिके!
मा मा पत सर्वतः प्रागनुभूतचरः संक्षोभ इव।
प्रकाशं कल्याणं घन पिहित शेषं दिनपतेः। इति (६१) सार्द्धं व्यत्यस्य प्रतिक्षमणूं भीत्यादि प्राग्वुक्तमेव पठति।

ततः प्रविशति नवमालिका करावलम्बिनी मिथ्याचकिता भूमिता मल्लिका

मल्लिका। सहि! मा मा पड़ेहि। इति नवमालिकां निवारयति।

---

(६०) निर्झरपातं पतामि। निर्झरो यथा पते तद्वत् पतामीत्यर्थः।

(६१) इति प्रकाशं कल्याणं घनपिहित शेषं दिनपते रित्युक्त प्रकारेण पादं निदर्शितिभिस्तु किरण मण्डिमानं छिमदच इत्याकारकम्। व्यत्यस्य व्यत्यासं विधाय। तथाच। निदर्शितिभिस्तु मित्याकारकादष्माङ्कोक्त पद्य प्रथम पाद स्थाने प्रकाशं कल्याणं घनपिहित शेषं दिनपते रित्येतं पादं संयोज्य इत्यर्थः। तथा पाठो यथा।

> प्रकाशं कल्याणं घनपिहितशेषं दिनपतेः
> प्रतिक्षमणूं बि प्रकटित भयाश्चर्य्य मभितः।
> तमोवा तेजो वा तदुभय परिम्लक्तिरथवा-
> किमप्येतत्तत्त्वं तिरयति जगद्दीपयति च ॥

इति। व्याख्यातमेतत् पद्यमष्टमाङ्कएव।

सर्व्वाः। सहर्षं विस्मयं। मल्लिकां प्रत्यक्षं परिरभ्य। सगद्गदं।
सहि! अवि सच्चं पच्चाअदासि। सहर्षं। दिट्ठिआ अणुकम्पिता म्हो देवेण। तदिदं प्रमुग्धस्य संज्ञालाभः, अन्धकारपतितस्यार्कदर्शनं, अङ्गारकवलितस्यामृतासारः।

मल्लि। सवाष्पं। सहिओ कहिं अज्जउत्तो।

इतराः। सहि! एसो तुह तारिसेण मलहव्भमेण अविस्साइ तत्तेण पदंसणेण तक्खण सञ्जाअ मोहुम्माद-परवसो इदो तदो काणणेसु परिहिण्डिअ एत्थ एव्व सम्मा-मूले मुच्छिओ ण उण पडि बुज्झइ।

मल्लिका। सवाष्पं। हा अज्जउत्त! इति बहु र्व्वं रुपसर्पति।
इतरा दर्शयन्ति।

मल्लि। तथाभूतं मारुतं दृष्ट्वा। हा हदम्हि मन्दभाआ।
हा णाह पेच्छ मं पेच्छ आगअं। इति छिन्नपातं पतति।

इतराः। अप्राप्त भूतलामेव करतलैर्गृहत्वा। सहि! मा मा अआहि मूच्छिओ एव्व एसो। ता अमुअसीएण तुह फस्सेण झत्ति पडि बोहेहि।

मल्लि। सगद्गदम्। सहीओ तुरिअं मूच्छाहरं मणिं मह छिन्ना वन्धादो उम्मोइअ अज्जउत्तस्स गव्भे णिक्खिवेह।

इतराः। अनान्तिकम्। मा दाव मणिं णिक्खिवामो पिअसहीए फस्सेण पडि बुज्झउ महाभाओ। प्रकाशं। सहि! एव्वं विहेण मणि सहस्सेण वि ण सम्मइ एदस्स मुच्छा तुमं दाव रत्तुप्पल कोमलेण करअलेण जइ परा मरिस्-सति अङ्ग मङ्गं तक्खणं एव्व पडि बुज्झिस्सदि।

कल। सखीनां वचनमनुमोदमानः।

सखि! धारय पत्युरङ्ग मङ्गैः
कठिनं मास्य मणिं निधेहि गात्रे।
त्वद्दर्शन शोक मूढबुद्धे
ननु मूर्च्छाहर मौषधं त्वमेव।

सवाष्पं सपुलकञ्चोत् सङ्गेन धारयति।

इतराः। सखीकरैः पल्लवैर्वीजयन्ति।

मल्लिका। मारुतं विलोक्य। णत्थि अज्जवि ण पड़िबुज्झइ अज्जउत्तो। कलकण्ठं मति। भद्दाभाग! तुह वअणेण पड़िबोहेहि वअस्सं। णहि तुए आइदो सिविणए वि तुह्मिं को (६२) होइ एसो

कलः। अयि मारुत!

निशमय गिरमस्या चक्षुषी स्निग्धतारे
तरलय धृत वाष्पां प्रेयसीं पश्य दीनां।
ननु कथयसि शश्वद्दर्शने मल्लिकाया
मम नयन निमेषो नाम क्वापि व्यथेति॥

नव। सहि! सहि! दिट्ठं खु मुच्छिदो महाभाओ मज्झे तुह परिरम्भेण पड़िबुज्झदित्ति ता क्खणं आलिङ्गेहि।

मल्लिका। सलज्जं स्वगतम्। अज्जउत्त! कीस उण एदाणं पुरदो लज्जावेसि। सवामि तुह चरणेहिं एक्कंदे देमि परिरम्भं ता उट्ठेहि।

---

(६२) तुम्हिं को (तुष्णीकः) तूष्णीं शील इत्यर्थः। तूष्णींशीलस्तु तूष्णीक इत्यमरः।

सख्यौ । सहि ! अहं पि अदूमि पञ्चालिङ्गिस्ससि । अज्ज उण एक्कं परिरम्भं देहि ।

मल्लिका । सभयं अञ्जलिं कुर्वती स्वगतम् । अज्ज उत्त ! पूर्वं क्खु सारसिआमुहेण पत्थिदो अज्ज दिज्जइ एसो परिरम्भो । इति सभयं सकम्पं पुलकसम्भिन्नमालिङ्गति ।

मारुतः । अनुभूय स्वगतम् ।

सोऽयं सर्व्वाङ्गीणः कर्पूरविलेपशीतलस्पर्शः ।
मन्ये स्वर्गमितोऽहं प्रियतमया चास्मि परिरब्धः ॥

नयने उन्मील्य मल्लिकां विलोकयन् आलिङ्गनं वीत्याय सहर्ष-गद्गदम् । अयि प्रेयसि मल्लिके !
दिष्ट्या परलोकगतामपि त्वामासादितवानस्मि ।

किन्नाक मेत्य चकितासि विदेशभीका
किन्तेऽभवन् सवयसः सुरराजवध्वः ।
किं नन्दनद्रुमतले रमते मतिर्वा
किं मे विलम्बकलया कुपितासि किञ्चित् ॥

कल । अद्यापि सोन्मादशेषमेव हृदयम् ।

मल्लि । स्वगतम् । हत्थि मं सम्गठ्ठिअं मण्णेदि अज्जउत्तो । हर्षशोकविवशा वचस्येव विलीयते ।

मारुतः । सख्यौ विलोक्य सहर्षम् ।

सखि नवमालिके ! सखि कालिन्दि ! किं युवा-मप्यागते स्थः । अथ जन्मनः प्रभृति अविरहितचणे युवां कथं मल्लिकां विहाय स्थास्यथः । पुनः सहर्षम् । हन्त रमयन्तिका सखः कलकण्ठोऽप्यत्रैव । सखि रमयन्तिके ! स्वागतं ते । सानन्दम् ।

अद्यापि पूर्णकामो यत् संगच्छे सह बान्धवैः ।
नाकोऽपि नरकस्तस्य यस्य मित्रं न सन्निधौ ॥

कल । सखे ! ननु मणिकूटशिखरमेतत् न पुनर्नाकः ।

मारु । सहर्षोत्कम्पं परितो विलोक्य ।

सखे ! सत्यमेव मेव ।

तदिदमपरमग्रं पत्तनं नामराणाम्
अयमपि शुभतोयो निर्झरो नाभ्रगङ्गा ।
विपिनतरव एते न द्रुमा नन्दनोत्था
वयमपि मनुजाः क्वो न श्रिता देवभूयम् ॥ (६२)

मल्लिकामालिङ्गन् । प्रिये ! किमेतत् ।

मल्लि । अज्जउत्त ! अहं क्खु तस्सिं पल्लव तप्पे पत-क्किआ अदमोहा ! पुणो परिवुत्ता पेक्खामि भअवदीए उवक्क वहिणं सिहा मणिणा भूसिअं विदेसट्ठिअं अत्ताणं । कहिअं भअवदीए सो किल देसो दमिलेसु कञ्चीउरं णाम सिरि कामक्खीए ठाणं ति । सर्वे विस्मयं नाटयन्ति ।

मारु । क्वाद्य भगवती ।

मल्लि । तदो कञ्चीउरादो भअवदिं आलम्बिअ झत्ति एत्थ एव्व आअदह्मि णोमालिआ हत्थे समप्पिदाअ व पेक्खामि पुणो भअवदिं ।

---

(६२) देवभूयं देवत्वं इत्यर्थः । स्याद्ब्रह्म भूयं ब्रह्मत्वं ब्रह्मसायुज्य मित्यपि । देवभूयादिकं तद्वत् इत्यमरः ।

इति श्रीमल्लिका मारुत व्याख्याने परिमलाख्याने नवमोऽङ्कः ।

प्रविश्य मन्दाकिनी। सस्मितं। वत्स! दिष्ट्या सविपन्न मनोरथोऽसि। सर्वे सहर्षं विनयनम्रतया प्रणमन्ति।

माध। भगवति अवाङ्मनस गोचरप्रभावे! श्रोतुमिच्छामि विस्तरतोऽमुं वृत्तान्तं।

मन्दाकिनी। वत्स! महती खल्वियं कथा तदनवसरोऽयं। दूयन्ते खलु विश्वावसु प्रभृतयः स्कन्धावारजनाश्च। तत् झटिति गत्वा आश्वासयामः।

कल। युज्यत एतत्।

माध। यद्भगवत्यै रोचते। कलकण्ठ! दर्शय पन्थानम्।

कल। इतः इतः। इति निष्क्रान्ताः सर्वे।

इति नवमोऽङ्कः समाप्तः।

---

## अथ दशमोऽङ्कः।

नेपथ्ये।

नेपालीनां मराले विरचयति कचे केतकीपत्रकल्पं
कण्ठे मुक्ताकलापान् द्विगुणयति सितान् पाण्ड्यसीमन्तिनीनाम्
कर्णे कर्णाटिकानां प्रकटयतितमां दन्तताटङ्कलक्ष्मीं
कार्पूरी पत्रवल्ली भवति तव यशो गण्डयोः केरलीनाम्॥ (१)

---

(१) नेपालीनामिति। कार्पूरी पत्रवल्ली कर्पूरकल्पित मकरिका इति विधेय विशेषणम्। उल्लेखालङ्कारः। एकेन बहुधोल्लेखादसौ विषयभेदत इति लक्षणात्।

पुनर्नेपथ्ये।

मिथ्याव्योमगिरौ निगूढ़घटनादुन्मादनाद्दन्तिनो
यस्ते भ्रामरकः क्रिया समभि हाराराब्धवैरोऽभवत्। (२)
प्रत्याहृत्य फलङ्गिरामशपटैराहन्यमानः स्वयं
व्रीड़ात् सोऽद्य पलायते स्वविषया व्याहन्यमानो जनैः॥

वैतालिकः। (३) साभ्यर्थ्यं सापह्नवम्। पलायते इति किमुच्यते।

स खलु कतिपयपदारोपित भामाढ्ययष्टः तमाल-विटपावलम्बो कात्यायनी हेलनाद्विभ्यता स्वपरिजनेनापि दूयन्तं समयं नो मोचितः। अथ पुनः प्रतिनिवृत्तायाः मन्दाकिन्याः वचसा त्रोटितबन्धनः तत्क्षण एव महाराज-मपत्रपापृच्छ्य अपलायिष्ट मगधेश्वरम्।

पुनर्विमृश्य। विदित सकलदुर्नय प्रपञ्चो भ्रमरकः चरणताडनं कलपिङ्गकस्य साम्प्रतं (४) प्रमेत्स्त।

विलोक्य साश्चर्यम्। कथमसौ करतलान्दोलित कनकवेत्रलतः कञ्चुकी किमपि वन्हिमार्गमादिशति। कर्णं ददाति।

---

(२) क्रियासमभिहाराराब्धवैरः। पौनः पुन्यं अतिशयो वा क्रिया समाभिहारस्तेन आरब्धं वैरं येन स तथाभूतः। अतिमात्र अततेन इत्यर्थः।

(३) वैतालिकः। बोधकार इत्यर्थः। वैतालिको बोधकार-इत्यमरः।

(४) साम्प्रतम्। युक्तमित्यर्थः। ध्ययसाम्प्रतं युक्तार्थे साधु-नार्थे च नानार्थ रत्नमाला।

नेपथ्ये। भो भो वन्दिनो मन्दरक्षुभितमहोदधि कलकलगम्भीरेण कोलाहलेन मा मा बधिरयत प्रपञ्चम्। शृणुत ते मल्लिकासखो मारुतः कुमारो भगवत्या मन्दाकिन्या मुखात् कामपि विचित्रां कथाम्। तद्विरमतु चचमुद्गर्जितम्।

वैतालिकः। आकर्ण्य सकौतुकम्।

कीदृशी सा कथेति कुतूहलेन स्फुटतीव मे हृदयम्। भवतु स्वयमेव सर्वं प्रकटी भविष्यति। ननु उच्यते अन्तःपुरगतमापणे शृणुत इति तद्यथेच्छं गच्छामि।

इति निष्क्रान्तः। शुद्धविष्कम्भकः।

ततः प्रविशति पटमण्डपोपविष्टः कलकण्ठ सखो मारुतः समीपतश्च सह रमयन्तिकया मल्लिका।

उचितेष्वा मन्दाकिनी विभवतश्च परिवारः।

मारुतः। भगवति! अवहिता स्मः। प्रस्तूयतां कथा।

मन्दाकिनी। वत्स मारुत! श्रूयताम्।

अस्ति सेतुबन्ध सीमन्तित महार्णव परिवल्गमान रघुनाथ पराक्रमायामायायाम्। (५)

मन्दानिल प्रसवगीत गुहाविहारि

नागङ्गनामणि विभूषणकान्ति चित्रः।

कुम्भोद्भव प्रणयिनीकरवर्द्धमान

पाटीरवल्लि वलयो मलयो गिरीन्द्रः॥

(५) सेतुबन्धेन सीमन्तितः सञ्जातसीमन्तः। (तारकादित्वात् सदस्य संजातमितीतच्। यो महार्णवः तेन परिवल्गमानः उपाश्रमानः रघुनाथपराक्रमो यस्यां सा तथोक्ता तस्यां आयायां दक्षिणदिशीत्यर्थः। परिवल्गते परिवल्गितरूपावितस्तोपचरितस्तु ल्लभिधानम्।

कल्प । स्वगतम् । सावष्टम्भोऽयमारम्भः ।

मारुतः । भगवति ! श्रूयते खल्वमी वक्तव्यम् ।

प्रतीयन्तां विश्वे परमगरिमाणः क्षितिभृतो
महीयान् कोऽप्यन्यः खलु मलयशैलस्य महिमा ।
गुणस्निग्धास्तत्तत् कुलगिरियशोहारिणि कुचे
विशुद्धां यत् कीर्त्तिं दधति वनिताश्चन्दनमिषात् ॥ (६)

नवमालिका । जनान्तिकम् । सखि ! मल्लिए मलआ-अलमिषेण विलम्भात्थणो वखिदो ।

मल्लिका । स्मयते ।

---

(६) प्रतीयन्तामिति । विश्वे लोके यद्वा विश्वे सर्वे परमगरिमाणः उत्कृष्टमहिमशालिनः क्षितिभृतः अष्टकुलाचला इत्यर्थः । प्रतीयन्तां प्रतीतिविषयाः क्रियन्ताम् । तेष्विति शेषः । तेषु हिमविन्ध्याद्यष्टकुलाचलेषु मलयशैलस्य मलयनामककुलाचलस्य महिमा महीयान् । तथा कोऽपि अनिर्वचनीयः तथा अन्यः अन्यादृशः खलु इतरकुलाचलमहिमतो विजातीयः किल इत्यर्थः । उपपादयति वनिताः तत्तत्कुलगिरीणां हिमविन्ध्यादिकुलाचलानां यशोहारिणि । महत्त्वकठिनत्वादिना कीर्त्त्यपहारकारिणि कुचे अधिकरणे चन्दनमिषात् पाटीरलेपव्याजात् विशुद्धां निर्मलां यत्कीर्त्तिं यस्य मलयस्य कीर्त्तिं कर्म गुणेषु स्निग्धाः स्नेहयुक्ताः सत्यः दधति बिभ्रति । तस्य मलयशैलस्येति पूर्वार्द्धेऽन्वयः । तथा च वनिताभिः हिमविन्ध्यादिकुलाचलयशोऽपहारिणि स्वकुचे मलयशैलयशसः केवलं गुणोत्तमत्वश्लाघापूर्वकधारणदर्शनात् मलयमहिमा अन्य एवेति भावः । अत्र चन्दनमिषादित्यनेन चन्दनत्वापह्नवव्यक्त्या कैतवापह्नुतिरलङ्कारः कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैरिति लक्षणात् ।

मन्दाकिनी। तस्मिन् कदापि सहकारनवप्ररोह

मुष्णन् कुहमुखमुखोद्गतमुग्धनादैः।

जाते वसन्तसमये सचिवः स्मरस्य।

देवश्चचार किल दक्षिणगन्धवाहः॥ ३॥

माल। ततस्ततः।

मन्दाकिनी। अहो स्वच्छन्द रुह्यानि महतां चरितानि यतः।

सोऽयं चरन् गिरितटीषु यदृच्छया स्वं

रूपं दधौ मरकतद्युति मातरिश्वा।

यद्वीक्ष्य हर्षजलशीकरिभिर्बभूवे

नेत्रैर्विलासवलितैर्वनदेवतानाम्॥

माल। सकौतुकम्। ततस्ततः।

मन्दा। अथ मणिधरनाम्नो मन्त्रिणो नागभर्तु-

र्मदनजयपताका मञ्जुला नाम कन्या।

वदनकमलगन्धाकृष्टलोलम्बमाला

विपिनभुवि सखीभिस्तत्र चिक्रीड बाला॥

माल। ततस्ततः।

मन्दा। ततश्च।

सा श्रोणिमन्थरगतिस्तनतान्तमध्या

वासन्तिकाः सुमनसः सदयं हरन्ती।

तापिञ्छ पिञ्छ (७) रुचिरं सविधे चरन्तम्

देवं ददर्श मरुतं लतिका निकुञ्जे॥

---

(७) तापिञ्छपिञ्छवत्। तमालकुसुममयूरबर्हवत् रुचिरं मनोहरं मेचकश्यामिलमित्यर्थः।

मारु । ततस्ततः ।

मन्दा । ततश्च ।

सेयं कन्या किमपि विशिखैर्मारुथैः पीड्यमाना
सीदद्गात्री दर मुकुलितापाङ्गमालोकयन्ती
प्रापद्गर्भं हृदय समनुध्यात तत्सङ्ग सौख्या
प्रासोष्टाव प्रचकित मतिः पत्रजाले कुमारम् ॥

मारु । एक एवहि समयो देवता गर्भाणां धारण प्रसवयोः । ततस्ततः ।

मन्दा । ततश्च । देवी गन्धवहस्तामदूषित कन्याभावामनुगृह्णन् अन्यासामपि हृदयक्षोभ माशङ्कमान स्तत्रैव तिरोऽभूत् । सापि पुनर्वातूलत्यचरितस्तनापि पितुर्बिभ्यती लतापल्लव तल्पे निधाय तं वालं तत्पालनार्थञ्च वनदेवतां याचमाना सवाष्पं स्वं धाम जगाम ।

मल्लिका । सदयम् । को उण रक्खओ अरस्सं मि माद् पिदुपरिच्चे स्स कुमारस्स ।

मन्दा । अथ पर्य्यन्तभाजो भगवतः कुम्भयोनेराश्रमात् समिदाहरणागतैर्मुनिदारकैः कृत्तो नीतः समर्पितश्च महर्षेः करे ।

मारु । सहर्षं । ततस्ततः ।

मन्दा । ततश्च ।

लोपामुद्रास्वतनयमति प्रश्नुतस्तन्यपायी
काले काले कलश जनुषा कृतसंस्कारवर्गः ।
हस्ताहस्तं मुनिजन वधू मण्डलैर्नीयमान-
स्तत्र स्थाने स किल ववृधे चक्षुषां बालचन्द्रः ॥

माधव। अहो पुण्यवानयं बालः। यतो भगवतो दुर्लङ्घ्य शासन स्तम्भित विकट विन्ध्याचल विजृम्भणस्य कुम्भयोनेः पादोपकण्ठ मगमत्। कलावं। वयसां दूरे खलु स भगवान् मुनि चक्रवर्त्ती।

प्राक् पाणिपल्लव पुटी चुलकी कृतेन
सत्यं समुद्र सलिलेन समं निपीतः।
दृष्ट्वा ततोऽपि विपुलं हृदयं तदीय
मध्यास्त सुस्थिर मवन्य रुचिर्मुकुन्दः॥

कलिं। सकौतुकं। भगवति! तस्य बालस्य कोऽपि वृत्तान्तं श्रोतुं मभिलाषो मे।

मन्दा। स खलु वर्द्धमानः।

क्रमलोल मुग्ध करपल्लव चितो
ऽलिकान्त चञ्च दलिकान्त कुन्तलः।
मृदु जानु सञ्चलन मङ्गदङ्गणान्
मपि किङ्किणी मधमरिङ्कदङ्गणे॥ (८)

ततश्च क्रमात्।

मुहुरिभ कलभानां कर्णे मामोटयन्तं
मृगपति पृथुकानां पाटयन्तं सटान्तम्।
अविनय वत मा मा वत्स हिंसां कुरुष्वे-
रिति मुनिजन एनं स्नेह गर्भं व्यरीरमीत्॥ (९)

---

(८) अलिकान्ते ललाटप्रदेशे चञ्चन् अलिरिव कान्तः कुन्तलो यस्य स तथाभूतः।

(९) व्यरीरमीत् वरोधेत्यर्थः।

मारु । सक्रोधं । स्वगतं । कथमेतत् कथा श्रवणात् किमप्युन्मनायित मिव बिभर्मि । प्रकाशं । ततस्ततः ।

मन्दा । ततश्च कालेन ।

शृङ्गार सागर विजृम्भणचन्द्रिकोत्थ
मुन्मादनौषध मनङ्ग मतङ्गजस्य ।
राग प्रवाल परिपोषवसन्त मासं
लेभे वयः स सुकृतं वनितेक्षणानाम् ॥ (१०)

नवमा । अपवार्य । कामन्दकि ! पेक्ख पेक्ख भट्टिदारिआए असुदिं कहासवणम्मि सविसेसो आअरो ।

मारु । ततस्ततः ।

मन्दाकिनी । आश्चर्यं । अति दुर्घटस्यापि घटने पाटवी खलु भगवान् परमेष्ठी । स हि कदाचित्कुटजाङ्कुर प्ररूढानां बालचन्दनलतानां पल्लवैः सवयो जनेन कल्पिते पर्य्यौचिते तल्पे शयानः ।

अङ्गैः कोमलजातरूप कदली गर्भप्रियं भावुकै
रम्भानैरपि विभ्रमैरनुचरान्विष्वक् सृजन्तीं स्मरान् ।
लज्जालोल कनीनिका कुलितया संभावयन्तीं दृशा
स्वप्ने कामपि कामनीयक निधिं कन्यां समालोकत ॥(११)

---

(१०) शृङ्गारेति । शृङ्गार एव सागरः तस्य विजृम्भणे चन्द्रिकेव उत्थं उद्भूतमित्यर्थः । सुकृतमिति पाठे । सुकृतं प्रियं कृत्यर्थः । अत्र सुकृतं प्रिये इत्यमर वचनात् । सुकृतमितीदं चिन्त्यम् । सुकृतमिति पाठे । वनितेक्षणानां सुकृतं [illegible] अनवरत् कर्म परिपाक भूतमित्यर्थः ।

(११) कमनीयकनिधिम् । सौन्दर्यैकस्थान मित्यर्थः ।

माध। श्रोतव्यं। ततस्ततः।

मन्दाकिनी। ततश्च।

तां मन्द मन्द हसितेन मुखाम्बुजेन

बालां समीपमभियातवतीं सलीलम्।

चेलाञ्चले करतलेन समालमम्बे

यावत् स तावदवधूय गतेव निद्रा॥

मल्लिका। वाद्गतापं। स्वगतम्। कामिश्मणप्पहेसिणी खु णिद्दा सिविणयलद्धे वलुह जणसमागमे असहणा विश्र तक्खणोच्चिश्र गच्छइ। प्रकाशम्। भश्रवदि! पडिबुद्धेण किं पडिवस्सम्।

मन्दा। अथ विगलितधैर्य्यो हा प्रिये! दर्शनं मे

पुनरपि वितरेति प्रस्तुतार्त्तप्रलापः।

अहमहमिकयाङ्के (१२) पातुकामा मजस्रम्

मनसिज विशिखानामेकमासीच्छरव्यम् (१३)

सर्व्वे। खेदं नाटयन्ति।

माध। ततस्ततः।

मन्दा। ततश्च। सह पांशुक्रीड़नादारभ्य हृदयनिर्विशेषाभ्यां जनयित्वा पवनेन समर्पि[illegible]भ्याम् [illegible]त्मानुरूपरूपशील विद्याशौर्य्यधैर्य्याभ्यां सवयोभ्यां मुपह्वरे (१४) पृष्टो न्यवेद[illegible] तस्या लक्षणानि।

---

(१२) अहमहमिकया अहं पूर्व्विकयेत्यर्थः। परस्परमहङ्कारेणेत्यर्थः। अहमहमिका तु वा स्यात् परस्परं यो भवत्यहङ्कार इत्यमरः।

(१३) शरव्यं लक्ष्यमित्यर्थः।

(१४) उपह्वरे रहसीत्यर्थः।

माधः । कथमिव ।

मन्दा ।

नवकुङ्कुमपङ्कवर्णमङ्गं नयने नीलसरोजपत्रदीर्घे ।
वदनं पुनरिन्दुरेव तस्माद्गलिता रोमलता कलङ्करेखा ॥ (१५)

अपि च ।

चूडापटे स्फुरति कोऽपि मणिर्यदंशुः
सौदामिनी भवति कैशिक नीरदस्य ।
हारावली च कुचयोरिभकुम्भभासो
र्लावण्यसिन्धु चलफेनततिद्युतिर्या ॥ (१६)

कलकण्ठः । अपवार्य्य ।

स्वप्नकान्तां कामयमानस्य तस्य सख्योरावेगमालोच्य सम्प्रति ममापि विषीदति हृदयम् ।

मन्दा । नो वाप्यः कलहंस पक्षलुलिता न स्मेरसूना लता
नो गुञ्जद्भ्रमराः सरोजपवना नोद्दामचन्द्रा निशाः ।
नो तल्पानि मृणालभङ्ग कलितान्यासन्ननङ्गज्वर-
क्रूरातङ्कधरस्य तस्य रतये तां सुभ्रुवं ध्यायतः ॥

मल्लि । सविषादम् । अस्माद्दे अविसादसवभावं सिवि-
णायकणणं अहिल संतस्स किं णु सरणम् ।

---

(१५) वदनं मुखं पुनः इन्दुरेव तस्मात् मुखात् गलिता कलङ्करेखा रोमलता इत्यन्वयः ।

( १६ ) इभकुम्भभासोः कुचयोश्च हारावली स्फुरतीत्यन्वयः । या हारावली लावण्यमेव सिन्धुः तस्मिन् चलायाः फनपतेः द्युतिरिव द्युतिः यस्याः सा तथा भूता । द्युतिरिव द्युतिरिति पदार्थवृत्तिनिदर्शना ।

मन्दा । यथायमपरपक्षचन्द्र इव दिने दिने परिक्षीयमाणशरीरः कदाचिद्यामसमावासेषु दिवसे गिरिनदीतटीभाजश्चन्दनतरोः प्रच्छाय शीतले तले किसलयतल्पमोपविष्टः कोमलकदलीव्यजनपाणिभ्यां चिन्ताशोकसमाकुलाभ्यां सवयोभ्यामुपास्यमानः करतलनिहितपरिपाण्डुदीनवदनो निःश्वसन् वाष्पमन्थरया दृशा गगनदर्शं * यदृच्छयाऽऽलोकत । तत्र च । मुक्तावदात नयनान् पाटलचञ्चून् गृहीतविसवलयान् शशधरवलक्षगतो ददर्श गगनाध्वजाङ्घिकान् हंसान् । (१७)

मालू । सकौतुकम् । ततस्ततः ।

मन्दा । तत्रैक केन विसकाण्डधिया खगेन
चञ्चा विदश्य कथमप्यपनीयमानः ।
वेगाच्युतोऽस्य तलिमे निपपात कोऽपि
हारः शरद्विशदचन्द्रमरीचि गौरः ॥

कल । विहस्य । उपकृतं दैवेन हंसस्य यो मृणालधिया केवल चञ्चूखेदाय तं बभार ।

मालू । सस्मितम् । ततस्ततः ।

---

* गगनदर्शम् । यद्यद्गगनं पश्यति तत् तत्सर्वं इत्यर्थः । तथाच निखिलं गगनमिति यावत् । कस्मिंश्चि डशिविदोः साकल्ये इति णमुल् । व्यलोकत ददर्शेत् ।

(१७) गगना ध्वनि आकाशमार्गे जाङ्घिकान् जङ्घाकरिकान् धावनचतुरानित्यर्थः जङ्घाकरिक जाङ्घिका वित्यमरः ।

मन्दा । ततश्च पतन्तमेव तं विश्रयत्वर्षात्फुल्लनयन

करतलेन गृहीत्वा सकाया वाचस्यौ ।

पुलकयति वपुर्मे स्पृष्टमात्रोऽपि हारो
ध्रुवमयमलसाक्ष्याः सम्प्रदृष्टो मया प्राक् ।
हरिमणिरयमग्रे प्रत्यभिज्ञायते य-
स्तनयुगमसितेन प्रावृणोदंशुकेन ॥ (१८)

कल । सवितर्कम् । एतेन मा क्वचिदस्तीति कल्पनीयं तैः ।

मल्लिका । आत्मन सनाये हारं विलोक्य । स्वगतम् । अस्मि

अज्ज उत्तोथा दिस्सइ हारस्स मज्झे हरिमणीअत्थि ।

मन्दा । अथ तां हारलतां अधिकन्धरमारोप

प्रियतमापरिरम्भमिव अनुभवं स्तदन्वेषणाय विधृतोत्साह

सञ्जात प्रत्याशाभ्यां सह सखिभ्याम् ब्रीडादिना पृच्छ्य

भगवन्तं कुम्भयोनिं अम्बरपथेन कौवेरीं दिशं प्रास्थित ।

माक । युज्यते यतो हंसानामागमः सैव दिगुपगन्या ।

मन्दा । प्रतिष्ठमानश्च ।

---

(१८) पुलकयतीति । स्पृष्टमात्रोऽपि हारः मे वपुः कर्म्म पुल-
कयति । अयं पुलकोद्भेदकरोहारः मया प्राक् अलसाक्ष्यां सम्प्रदृष्ट
ध्रुवं सत्यम् । अत्र युक्तिमाह यः हरिमणिः असितेन नीलेन अंशुकेन
अलपकिरणेन । अस्ये इति कनू । स्तनयुगं कर्म प्रावृणो-
आच्छादयतिस्म । अयं हरिमणिः इन्द्रनीलः । अग्रे पुरस्
प्रत्यभिज्ञायते प्रत्यभिज्ञेव आचरति । प्रमानार्थकात् प्रत्यभिज्ञा पद
कर्त्तुः क्यङित्यादिना । क्यङि क्यङ् मानिनेत्येति पुंवद्भावे
सार्वैति दीर्घं विज्ञम् ।

सोऽयं रराज रजनीकरसुन्दर श्री-
हारावहार किरणच्छुरिताम्ब गर्भः।
आश्चर्य निश्चलकनीनिक लोचनाभि-
रालोकितो मुहुरमर्त्य नितम्बिनीभिः॥

माल। ततस्ततः।

मन्दा। ततश्च। मज्जदभ्रमरवधूस्तनयातकुम्भ
कुम्भस्थलस्खलन जर्जरितोर्म्मिमालाम्।
सप्तर्षिमण्डलनिषेवित कूलदेशम्
पश्यन् जगाम स पुरन्दरलोकसिन्धुम्॥

माल। ततस्ततः।

मन्दा। तत्र च। कल्पतरूणां निकटे।
सकलसुमनः सौरभ्याणां प्रपञ्चयितुः सुतम्
मलयमरुतो दृष्ट्वा प्राप्तं मनोभवमोहनम्।
मुदितमतिरम्लानां मालां सवन्ध मधुच्युतम्
विनयनमिते मुग्धे कण्ठेऽस्य नन्दनदेवता॥ (१९)

माल। स्वयमसि मल्लिका हर्त्ता मालां वीक्षते।

मन्दा। ततश्च।

तत्सौरभानुचलितैः पटलैरलीनां
विष्वक् प्रवर्त्तित कलिन्दसुता प्रवाहः।

---

(१९) सकलेति। सकल सुमनः सौरभ्याणां प्रपञ्चयितुः विस्तार-
यितुः गन्धवहस्येत्यर्थः।

गन्धर्वगीतरव मूढ़ कुरङ्गयूथं

गौरीगुरुम् (२०) गगनचुम्बितटं प्रपेदे ॥

माध। ततस्ततः।

मन्दा। ततश्च। तदितस्ततश्चलितया सगणसिन्धोरुप-कूलं उन्मदविद्याधरीवदनाम्बुजगण्डूष सीधुसेकविकस्वर-केसरम् (२१) कोमलकङ्केलि ताड़नसफल किन्नरकामिनी पाटलचरणाम्बुजजल्पाकमणितुलाकोटिमधुरनिक्वाणझङ्कार-झरमनोहरं गर्वितगन्धर्वललनातुङ्गकुचकलशा लिङ्गन पुलकितकुरवकं उद्भ्रान्तभृङ्गपटलघटितकपटाम्बुद-दर्शनताण्डवितशिखण्डिमण्डल मण्डितकनककदली मण्डल-मण्डपं सर्व योजनविस्तृतमारामवगाह्य।

---

(२०) गौरीगुरुं हिमालयमित्यर्थः।

(२१) उन्माद विद्याधरी वदनाम्बुज इत्यादि मध्ये। उन्मदो यासां ताश्च ता विद्याधर्यश्च तासां वदनाम्बुजगण्डूषसीधूनां मुखगण्डूषमद्यानां सेकेन विकस्वरा विकाशिनः केसराः पुन्नाग तरवो यस्मिन् तं तथाभूतं कामिनीवदन मदिरायाः पुन्नागदोहदत्वादिति भावः। कोमलानि मृदुलानि कङ्केलिताड़ने अशोकताड़ने सफलानि यानि विद्याधर कामि-नीनां पाटल चरणाम्बुजानि तेषु जल्पाकानां वाचालानां मणितुलाको-टीनां रत्नमञ्जीराणां निक्वाण झङ्कारैः मनोहरः प्रचुर रसम्। कामिनी पादताड़नस्य अशोक दोहदत्वादिति भावः। गर्वित गन्धर्वललना तुङ्ग-कुच कलशालिङ्गनेन पुलकिताः कुसुमिताः कुरवकाः यस्मिन् तं तथा भूतम्। ललनालिङ्गनस्य कुरवक दोहदत्वादिति भावः। अत्र दोह-दत्वे प्रमाण वचनानि तु दोहद शास्त्रे द्रष्टव्यानि विस्तर भयान्न लिखामः।

उपचतुर कनकध्वजदण्डशृङ्ग-
शोणांशुकोल्लिखितकेसरि पुङ्गवाङ्कम् ।
कैलासकूटधवलोन्नत मातुलोके
कात्यायनीभवनसौधमुदात्तकीर्त्तिः ॥

माधवः । स्वगतम् । दृष्टचर इवायं प्रदेशः । प्रकाशम् ।
ततस्ततः ।

मन्दा । ततश्च तत्र प्रविश्य प्रणम्य चरणमम्बिकायाः
ते मण्डपैकदेशे स्फाटिकीं वितर्दिं मध्यासीनां कामपि ।
ा विघ्नोपसर्गाऽनपहतनियमस्थैर्यया मध्यनाडी
श्रेणीनिगूढां हृदयसरसिजे व्यक्तमुद्बुध्यमाने ।
मानं वीक्षमाणां स्फुटपुलकतनुं शान्तगम्भीरवेषां
मोहिस्मिताक्षीविनयमतगिरा वर्षिणीं सिद्धयोगाम् ॥(२२

---

(२२) बुध्येति । विघ्नोपसर्गैः अनुपहतं नियमस्थैर्यं यस्यास्तया
भूतया बुध्या मध्यनाड्याः सुषुम्णायाः पर्वग्रन्थीषु प्रासाद सोपान
देष क्रमादुपर्युपरि श्रेणी भूत पर्वग्रन्थिषु इत्यर्थः । निगूढां
दृश प्राणां सुषुम्णा मार्गे प्राणनिरोध पूर्वक मनःस्थिरी भावात्मिकां
ोन्मनीमपि मता स्थितिभावः । उक्तञ्च हठप्रदीपे । यावद्बद्धो
हे यावच्चित्तं निरञ्जनम् । यावच्चक्षुर्भ्रुवोर्मध्ये तावत्कालभयं
ः । विधिवत् प्राणसंयामै र्नाडीचक्रे विशोधिते सुषुम्णावदनं भित्वा
ाविशति जायते । यो मनः सुस्थिरीभावः सैवावस्था मनोन्मनीति
च । सुषुम्णावाहिनि प्राणे शून्यं विशति मानसे । तथा स सुक्तः
ाणि निर्मूलयति कर्मवित् । इति । अत्र शून्यपदं सुषुम्णा मार्ग-
पकम् । उक्तञ्च । सुषुम्णा शून्यपदवी ब्रह्मरन्ध्रं महापथः । इति ।
ारस्तु । भात्वा सुषुम्णा सम्भेदं कृत्वा वायुञ्च मध्यगम् । कृत्वा तु तां

वह्निस्थाने प्राणं रन्ध्रे निरोधयेदिति। अपिच। हिमप्रति सहस्राणि नाड़ी द्वाराणि पञ्जरे। सुषुम्णाशाम्भवी शक्तिः शेषास्त्वेव निरर्थकाः। वायुः परिचितो यः स्यात् अग्निना सह कुण्डली बोधयित्वा सुषुम्णायां प्रविशेदनिरोधतः। सुषुम्णा वाहिनि प्राणे सिद्ध्यत्येव मनोन्मनी। अन्यथा विविधाभ्यासाः प्रयासा येव योगिनाम्। पवनो बध्यते येन मनस्तेनैव बध्यते। इत्यादिना। मनोयत्र विलीयेत पवन स्तत्र लीयते। दुग्धाम्बुवत्सम्मिलितौ सदैव तुल्यक्रियौ मानसमारुतौ च। यावन्मनस्तत्र मरुत्प्रवृत्तिः यावन्मरुत्तत्रमनः प्रवृत्तिः तत्रैक नाशादपरस्य नाशः एक प्रवृत्तेरपरप्रवृत्तिः। अधस्तयोश्चेन्द्रिय वर्ग वृद्धिः विध्वस्तयोर्मोक्षपदस्य सिद्धिरिति। अन्यच्च यावन्नैव प्रविशति चरो मारुतो मध्यमार्गे इत्यादि च। मध्यमाड़ी पदेन सुषुम्णैवोच्यते। तदुक्तम्। गङ्गायमुनयोर्मध्ये। बालरण्डा सरस्वती बलात्कारेण गृह्णीयात् तद्विष्णोः परमं पदम्। इडा भगवती गङ्गा पिङ्गला यमुना नदी। तयोर्मध्ये प्रयागन्तु यस्तं वेद स वेदवित् इत्यादि अनेन हठ योगानुष्ठिति र्वर्णिता। अतएव व्यक्तं रुद्ध्यमाने विकासं प्राप्नुवन्ति। तदुक्तम्। सुप्ता गुरुप्रसादेन यदा जागर्त्ति कुण्डली तदा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोऽपि च। प्राणस्य शून्यपदवी यदा राज पथायते। तदा चित्तं निरालम्बं तदा कालस्य वञ्चनमिति। हृदयसरसिजे हृदयान्तर्वर्त्तिनि पुण्डरीके अष्टदलात्मके अधिकरणे स्थित मिति शेषः। आत्मानं परमात्मानम्। तदुक्तञ्च पद्मकोश प्रतीकाशं हृदयं चाप्यधोमुखम्। अधोनिष्ट्याविवतस्यान्तु नाभ्या मुपरि तिष्ठति। हृदयं तद्विजानीयात् विश्वस्या यतनं महत्। सन्ततं शिराभिस्तु लम्बत्याकोश सन्निभम्। तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्। तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः। सोऽग्रभुग्विभजन् तिष्ठन् आहार मजरः कविः। सन्तापयति स्वन्देहं आपादतल मस्तकम्। तस्यमध्ये वह्निशिखा अणीयोर्द्ध्वा व्यवस्थितः। नीलतोयद मध्यस्था विद्युल्लेखेव भास्वरा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। इति। स सुष्ठु योगस्याचां साक्षात् कुर्वती अनेन राजयो-

आह्व । ततस्ततः ।

मन्दा । ततश्च । तया सह अङ्गमुत्थाय व्याहृतस्वामतया चिरपरिचितयेव सम्भाव्यमानः क्षणमुपविष्टो मातिदूरभाजि लतामण्डपे दत्तश्रुति (२१) रश्रौषीत् लयच्छिन्नानि द्रुतमध्यविलम्बितानि ।

रमयन्तिका । जनान्तिकम् । सहि मल्लिए ! किं णु रसायणं क्खु एसा कहा ।

---

गानुष्ठितिः वर्णिता । अतएव स्फुट पुलक तनु व्यक्तीभवत्तद्दर्शना नन्दानुभावभूतरोमोद्गमां शान्तगम्भीरवेशां सिद्धयोगां फलितयोगां मह फलिष्यमाणयोगां निर्मर्थः । वर्णिनीं ब्रह्मचारिणीमव्यूढां विस्मिताक्षः उत्फुल्लनयनः विनयनम्रशिराः अप्राक्षीत् ।

( २१ ) दत्तश्रुतिः सन् लयच्छिन्नानि लयैः तालान्तरालवर्त्ती यः कालोऽसौ लयनामा इत्युक्त लक्षणैः कालविशेषैः छिन्नानि परस्परस्पर्शरहितानि द्रुतमध्यविलम्बितानि क्रमात्तच्चोघ घनाख्यान् कालविशेषान् इत्यर्थः । अश्रौषीत् अशृणोत् । तथाच नृत्यध्वनिं शुश्राविति भावः ।

* लयः दशतालप्राणान्यतमः तालान्तरालवर्त्ती लयनात्मकः कालविशेषः । उक्तञ्च प्रस्तारे । कालो मार्गः क्रियाऽङ्गानि ग्रहजातिः कलालयः । यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः । तत्र तालान्तरालवर्त्ती यः कालोऽसौ लयनामा इति च । तेन छिन्नानि पृथक् पृथक् त्वेन दर्शितानि द्रुतमध्यविलम्बितानि दक्षिणवार्त्तिक चित्रापरनामधेयाः क्रमाद्द्विचतुरष्टमात्राकाः तालप्राणान्यतमाः कलाः इत्यर्थः । तत्र ध्रुवाऽपरनाम्नी तुर्याख्या एकमात्रा च कला प्रसिद्धा सा पुनरत्राऽप्रस्तुता । उक्तञ्च । कलाः सुताल चत्वारो ध्रुवचित्रश्च वार्त्तिकः । दक्षिणश्चेति तत्र स्युर्ध्रुवके मात्रका कला । शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् । एवैव कथ्यते लोके विलम्बो मध्यमो द्रुतम् । तुर्यश्चेति तदा कालः संज्ञायां गायकोत्तमैः इति ।

मल्लि। सहि ! मह उण अस्सिं कहा सवणे किं वि किं वि उस्सुअं विअ हिअअम ।

मन्दा । अथ तया वर्णिन्या सादरं महाभाग ! दिष्ट्या भूषयस्यमुं प्रदेशम वयस्ये खलु मलयगिरिकटक प्रत्यागतैः सोत्कण्ठं गान्धर्वगोष्ठीवर्त्तैः । अस्ति चात्र विमलयशोराशिवितानित प्रपञ्चस्य विद्याधरामात्य चक्रवर्त्तिनो विश्वावसोर्विलास लावण्यमयी कन्या। किं बहुना । यस्याहं सोपहृतममुं हार मुरसा सम्भावयति महाभागः सैवेयं कन्यका पर्य्यन्तभाजिलता भवने देवीं भवानीं कन्दुक क्रीड़ितेन आराधयति । श्रूयते खलु भूषणध्वनि स्तत्रकामो । वयमपीति व्याहृते हर्षविस्मय स्तिमितमति स्तयैव दर्शितमार्गः सह सखिभ्यां तमेव प्रदेश मगमत् ।

मारु । सहर्षम् । दिष्ट्या गगनलताम् कामयमानस्य सत्यैव सा जाता ततस्ततः ।

मन्दा । ततश्च ।

> भृङ्गारचामरकलापदुकूलवीटी
> क्रीड़ा शुकव्यजन रत्नकलाचि हस्ताः ।
> आत्मावलोकनकुतूहलयापिताक्षीः
> गच्छन् ददर्श परितः परिवारकान्ताः ॥ (२४)

ततश्च ।

---

(२४) भृङ्गारेति । भृङ्गारः सौवर्ण पात्र विशेषः भृङ्गारः कनकालुकेत्यमरः । वीटी ताम्बूली रत्नकलाचिः रत्नमयः ताम्बूलस्थापनपात्र विशेषः धुन्धूर कुसुमाकृतिः ।

अथालोकय लोचनोत्सवमिति श्रुतेस्म सा वर्णिनी
यावत्तावदसौ विभूषणभरप्राग्भारानुयातेक्षणः ।
तामालोकत शोभनीय सुषमापीयूषधारोत्करै
र्वल्गौ सद्मनि वाम्मुचीव कनकस्निग्धां तडिल्लरीम् ॥ (२५)

माध । लोलकण्ठम् । ततस्ततः ।

मन्दा । ततश्च । सा त्रिभुवनविजयसमये विरिञ्च दत्ता सर्गाभ्यास पाटवशंसिनी हस्तोपायन पुत्त्रिकेव देवस्य मकरकेतनस्य (२६) विविधविरचितशारी विशेषं आरब्ध विभ्रमसम्भ्रमोद्वेगशिथिलबन्ध धम्मिल्ला पातिमाल्य कुलं

---

(२५) अथेति । विभूषणभराग्भारानुयाते क्षणः सन् यन्नी सद्मनि शोभनीय सुषमापियूष धारोत्करैः उपलक्षितां तां कन्यां वाम्मुचि जलदे कनकस्निग्धां तडिल्लरीमिव इत्युपमा आलोकत अपश्यत् ।

(२६) सेति । देवस्य मकरकेतनस्य त्रिभुवन विजय समये । सर्गाभ्यासपाटव शंसिनी स्वसृष्टि सामर्थ्य प्रकाशिका विरिञ्चेन ब्रह्मणा दत्ता हस्तोपायनपुत्त्रिकेव अजस्रकरधारणोपयोग्युपायन भूतशाल भञ्जिकेव स्थितेत्युत्प्रेक्षा । सा कन्या कर्त्री विविधाः विरचिताः शारीर विशेषाः कन्दुकक्रीडाव्यवहारादितरव्यवहारविशेषाः इत्यर्थः शारिर्ना-क्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगज पर्य्याणे व्यवहारान्तरेऽपि-चेति मेदिनी । स्वैरालापादिति यावत् । यस्मिन् कर्म्मणि तद्यथा स्यात्तथा चञ्चल सखीभिर्म्मण्डलेन मण्डलाकारेण विहिताः कृताः विविधाः अनेक प्रकाराः वाटाः मार्गाः यस्मिन् कर्म्मणि तद्यथा स्यात्तथा वाटो मार्गे वृतिस्थाने इति मेदिनी । जनिता स्वेन स्वस्मिन्नुत्पादिता क्रीडा यस्मिन् कर्म्मणि तद् यथा स्यात् तथा किञ्चिद्व्रीडया साच निःशब्दः । एवमवशिष्टाना मपि क्रिया विशेषण तर्कैरन्वयः । अक्रीडत् चिक्रीड ।

आलोललोचनोत्पलविषयीकृत पतितोत्पतितकन्दुकताड़-नाकुलकरकमलपल्लवित कुटीभागं अवनमनोन्नमनवेपि-तस्तनकुम्भत्रुटितकञ्चुलीकं अनुक्षणाघट्टितभङ्गुरमध्यतलं अङ्कुरितघर्मकणसंहति मल्लीकोमल चपलदुकूलं निविरोध नितम्बवाचालकाञ्ची कलापं अरुणाङ्घ्रि पल्लवनिष्ठ्यूतयाव-कलवाञ्छितमणिकुट्टिमं अखिलसखीमण्डलविहितविविध-वाटं जनितब्रीड़मक्रीड़त् ।

मारु । ततस्ततः ।

मन्दा । ततश्च । स तूर्णमुपसृत्य विस्मृतनिमेषाभ्यां लोचनाभ्यामापिबन्निव तां उपह्वरे सवयोभ्यां पृष्टोऽकथयत् ।

तद्वदनं ते नयने साभ्रूः सा कन्धरा स विम्बोष्ठः ।
तौ वक्षोरुहकुम्भौ सा श्रोणी ते पदे च सैवेयम् ॥ (२७)

अथ तदवस्थादर्शन द्विगुणितमन्मथः पुनरप्युपह्वरे ताविदमवादीत् ।

झलं झलितकङ्कणं चलित तुङ्गपीनस्तनं
चलत् कुटिल कुन्तलं चपलनीलनेत्रोत्पलम् ।
श्रमाम्बु लुलिताननं श्रवणपातितोत्तंसकं
निहन्ति मम मानसं नहि नहि ध्रुवं कन्दुकम् ॥

मारु । जनान्तिकम् । सखे कलकण्ठ ! मल्लिकापि द्वीपान्तरजुषा चित्रकारेण हिमगिरि लतागृहे (२८) कन्दुकक्रीड़ाखिन्ना लिखिता । प्रकाशं ततस्ततः ।

---

(२७) तद्वदनेति । वदनं तत् प्राक् स्वप्नदृष्टं एवमेव नयने ते भ्रूः सा इत्यादौ च तच्छब्दस्यार्थः ।

(२८) हिमगिरि लताग्रहे इति । शैलेन्द्रो हिमवानयं इत्यारभ्य

मन्दा । ततश्च सा ।

मूर्त्तं वसन्तमिव साङ्गमिवाङ्गयोनिं
तं वीक्ष्य विभ्रमविलासतरङ्गिताक्षी ।
तत्तद्भ्रमीवलनदत्त कटाक्षमाला
क्रीडाविशेषमभिपूर्य्य शनैर्व्यरंसीत् ॥ (२९)

माध । ततस्ततः ।

मन्दा । ततश्च सा ।

कन्दुकगर्भेणैवाञ्जलिना प्रणम्य तां वर्णिनीम् ।
क्रीडावेगविलम्बिनः श्रमकणा कीर्णांतृकपोलस्थला
मुग्धे नाङ्गुलि पल्लवेन शनकैरुत्सारयन्ती कचान् ।
पश्यन्ती तमरालतारकरुचिस्निग्धैर्दृशोरश्चलै
र्वीला बालसमीरकम्पितलतालीला मधत्त क्षणे ॥ (३०)

ततश्च सः ।

मुक्ताहारैरिव हरिमणिस्यूतचित्रान्तरालैः
ज्योत्स्नाजालैरिव निपतितैः साकमङ्कप्रभाभिः ।
गङ्गापूरैरिव च यमुनावेणिसम्भेदहृद्यै
राकीर्णोऽभूदसितधवलैरायताक्ष्याः कटाक्षैः ॥ (३१)

---

लाना कन्दुक खेलनेन खिन्निता सञ्जीवितं मल्लिका इति प्रागुक्त प्रकारेणेति भावः ।

(२९) तत्तद्भ्रमी वलन इत्त कटाक्षमाला । तासां तासां भ्रमीणां कन्दुकखेलन भ्रमीणां वलनेषु परिवृत्तिषु दत्ता कुमाराय प्रेरिता कटाक्ष माला यया सा तथा भूता सतीत्यर्थः ।

(३०) बालसमीर कम्पित लतायाः लीलेव लीला तां इति पदार्थ इतिनिर्दर्शना ।

(३१) मुक्ताहारैरिति । हरिमणि रिन्द्रनीलः तेन स्यूत-

तस्मिन् हि समये ।

द्राघीयांसश्वसितमरुतो घर्मलेशा मुखेन्दौ
गात्रे सादो दृशि मुकुलता वेपथु स्चोरुकाण्डे ।
तत्तत्ता स्ता स्ता स्मरविकृतयः केलिखेदेऽपि तुल्याः
सर्वाङ्गीणस्तदपि सदृशो भेदको रोमभेदः ॥ (२२)

नवमा । जनान्तिकम् । सहि मल्लिए ! कीस उम्माणा-अंतो विअ दीससि ।

मल्लिका । वाष्पायते ।

मन्दा ।

सखेदरुङ्गालितसुन्दरेषु गात्रेषु तस्याः प्रतिविम्बमानः ।

---

चित्रान्तरालैः मुक्ताहारैरिव, तथा अङ्गप्रभाभिः श्यामरूपाभिः साकं निपतितैः ज्योत्स्ना जालैरिव, तथा यमुनावेण्याः सम्भेदः सम्पर्कस्तेन स्फुटैः गङ्गापूरैरिवच स्थितैरितिशेषः । आयतालाः अधितधवलैः कटाक्षै राकीर्णोऽभूत् । अत्र वर्णनीयानां अधितधवल कटाक्षाणां विशेषण विशिष्ट मुक्ताहारादि वहूपमानदानात् वहूपमालङ्कारः ।

(२२) द्राघीयांस इति । ऊरुकाण्डे वेपथुः कम्पश्च आसन् इत्यध्याहारेणान्वयः ऊरुकाण्डे वेपथुरित्यनेन वक्ष्यमाणस्मरविकृतेः साफल्यं सूच्यते तदुक्तं निमित्त निदाने ऊरोः स्पन्दादुरतिं विन्द्यात् ऊर्वोः स्पन्दात् सुवाससः इति । तत्ताः समस्ताः तास्ताः दीर्घश्वास घर्मलेशादयः केलिखेदेऽपि क्रीड़ाजन्य श्रमेऽपि । तुल्याः समानाः स्मरविकृतयः मन्मथविकाराः तदपि तथापि सदृशः सर्वाङ्गीणः सर्वाण्यङ्गानि व्याप्नुवन् रोमभेदः रोमाञ्चः कर्त्ता भेदकः केलिखेदाव्यत प्रकाशकः । दीर्घनिश्वसित स्वेदादीनां श्रमस्मर विकारोभयानुभावत्वेऽपि तयोः श्रमस्य पुलकोद्गमो नानुभाव इत्यतः केलिखेदभिन्नत्वेन स्मरविकारत्वं निश्चीयत इति भावः ।

लावण्यदुग्धाब्धितरङ्गमध्ये तरन्निवेन्दुः क्षणमीक्षतेऽस्य॥ (२२)

मारु। ततस्ततः।

मन्दा। अथ तां सा वर्णिनी वत्से! सोऽयम्।

वासन्तिकस्य मरुतो दयितः कुमारः
कुम्भोद्भवेन मुनिना स्वयमेधिताङ्गः।
त्वामालिलोकयिषु रागमदस्य हि त्वं
आकर्ण्य किन्नरमुतं गुणमुत्सुकाक्षीः॥
अथ स्वागतेन सम्भावयेत्य कथयत्।

मारुत कलकण्ठी। सश्लाघम्। भगवति! सापि भगवती युष्मत्तो गुणैरन्यूनेति मन्यामहे। कथ्यतां अपि स्वागतमप्राक्षीत् सा कन्या।

मन्दा। न तावदसौ वाचनिकी (२४)

अपि तु। प्रागेव सा श्रवणजातदृढानुरागा
तं प्राप्तवन्तमभिगम्य विमोहनाङ्गम्।
भूयोऽपि मन्मथविलासजुषः कटाक्षान्
माहोत्पलीः स्रजइवामुचदस्य गात्रे॥

मल्लि। जुज्जइ एदं। कहं णु णिसग्ग सालीण सहावो (२५)

---

(२२) लावण्य दुग्धाब्धितरङ्गमध्ये तरन् इन्दुरिवेत्युत्प्रेक्षा। क्षणं क्षणकालं प्रतिफलन समये इत्यर्थः।

(२४) न तावदसौ वाचनिकी। असौ स्वागत वार्त्ता वाचनिकी वचनसम्बन्धिनी न तावद्वाचा स्वागत मपृच्छ दितिभावः।

(२५) निसर्गेण स्वभावेन शालीनः अधृष्टः स्वभावोयस्य स तथोक्तः स्यादधृष्टे तु शालीन इत्यमरः।

कुसुमकलम्भाजणो मागम्मं वा हरदु । कहेहि देण महाभा-
एण तदो किं पडिवसम् ।

मन्दा । अथ सः ।

क्षोभयन् भ्रमरमण्डलमारात्
सौरभेण मधुरस्य मुखेन्दोः ।
व्याहरद्दशनदीधिति पुञ्जैः
व्याकिरन्निव घनं घनसारम् ॥ ( २६ )

मारु । सकौतुकम् । कथमिव ।

मन्दा । भगवति ! किं स्वागतसम्भावनेन पश्य ।
सौहार्दमालिङ्गहृदयं सन्तोषस्मेर मेदुरा दृष्टिः ।
सम्भावना सतामियमन्यस्त्वाचारडम्बरः कथितः ॥ इति

मारु । साधु विदग्ध मधुरं वचनम् । ततस्ततः ।

मन्दा ॥ ततश्च । तयोरन्यतरेण सख्या हारोऽयं अत्र
भवत्याः हंसमुखात् पतितो गृहीतोऽस्माभिः जरो क्रियतां
भूयोऽपीति व्याहृते सखी पुनस्तस्याः महाभाग ताराव-
लीव गगने हारावलीयं विराजतु महाभागस्यैव दोरन्तरे ।
दीयतां पुनरियं दिव्यपरिमला माला (२७) कुतूहलिनी
खलु नो भर्तृदारिकेति सस्मितमकथयत् ।

---

(२६) घनसारं कर्पूरं घनसारश्चन्द्रसंज्ञ इत्यभिधानम् ।

(२७) दीयतामिति । दिव्य परिमला इयं माला पुनः मारुत
कण्ठगता माला तावदित्यर्थः । दीयतामित्यन्वयः । अत्र हेतुमाह ।
कुतूहलिनीति । कुतूहलिनी खलु मारुतकण्ठगतमालापेक्षिणी
खिल इत्यर्थः ।

माल० । ततस्ततः ।

मन्दा० । ततश्च सा सखी ।

तेन प्रहृष्टमनसा स्वकरेण दत्ता

मादाय शृङ्खलगोतगुणां स्रजं ताम् ।

अग्राम्य काकुवचनत्रपमाण दृष्टे

रस्याः सखी त्वमवसञ्जयतिस्म कण्ठे ॥ (१८)

माल० । किं तवापि हारमाल्ययोर्व्यत्ययः ।

मन्दा ।

अत्रान्तरे झटिति कञ्चुकिभिः समेत्य

विद्याधरेन्द्र सचिवस्य पितुर्निदेशात् ।

दूता गृहानगमदङ्गजपीड़िताङ्गी

बालामुहुर्वलितकन्धरमीक्षमाणा ॥

माल० । ततस्ततः ।

मन्दाकिनी । गृहं गता च ।

तमहीनभुजङ्गभोमबाहुं सुकुमारे बत मानसे वहन्ती ।

विवशा शयनीविसीददङ्गं शयनीत्सङ्गमसेवत श्वसन्ती ॥१९

अचिन्तयच्च ।

अस्य खलु कस्याश्चिदतिशयालुपुण्यायामासक्तं हृदयम् ।

---

(१८) न विद्यते ग्राम्यं अश्लीलं यासां तास्तथाभूताः काकवः ध्वनि-विकाराः येषां तानि अग्राम्य काकूनि तानि च तानि वचनानि च तैस्त्रपमाणो हर्षितवंश्चासत्तस्यास्तथाभूतायाः इत्यर्थः ।

(१९) अहीनो अल्पौ यौ भुजङ्गौ तद्वोर्भीमवत् बाहू यस्य स तयोक्तस्तम् ।

तथाहि । वर्णान्तरेण बिसकाण्डमहोदरेण
स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रम्लायतीव किमपि श्वसितानिलेन
बिम्बाधरोऽपि कुरुविन्ददलाभिरामः ॥

नवमालिका कालिन्द्यौ । जनान्तिकम् । सहि ! तुएवि उत्तरिज्जञ्चले महाभाअ पडिच्छन्दं दठ्ठूण एसो एव्व सुलोओ कहिओ ।

मन्दा । इति चिन्तयन्तीमेव तां विलम्बयाऽऽगता ताम्बूलकरङ्कवाहिनी तत् २ वयोभ्यामुपवर्णितं स्वप्नवृत्तान्तमखिलमकथयत् ।

मार । ततस्ततः ।

मन्दा ।

बुध्वा तस्य चिरोपगूढ़निविड़ं प्रेमाणमात्माश्रयं
सा प्रत्यागतजीविता द्विगुणितानङ्गापि निर्वृणतो ।(४०)
तद्रूपं (४१) विरहावपाण्डुमधुरं न्यस्तोत्तरीयाञ्चले
दोर्मूलेऽलिखताऽस्य चन्द्रधवलां तामेव हारावलिम् ॥

मल्लि । स्तनांशुकं दृष्ट्वा । स्वगतम् । एत्थ वि हार सहिदो अज्जउत्तस्स पडिच्छन्दो ।

मन्दा । सोऽपि पुनः ।

---

(४०) द्विगुणितानङ्गापि द्विगुणीभूतस्मर विकारापि निर्वृणती तथाभूतत्वमाच्छादयन्ती सतीत्यर्थः ।

(४१) तद्रूपं तस्य कुमारस्य रूपं आकृतिमित्यर्थः ।

तस्याः स्मरत्युदमनायत सद्म यान्त्या
सम्भ्रान्तभृङ्गगणवारणकैतवेन ।
मध्ये सखि ! त्रिकविवर्त्तिविलोकितैक-
वक्षोजमर्द्दनयनाञ्चलवीक्षितायाः ॥ (४२)

माद । ततस्ततः ।
मन्दा । ततश्च ।

उत्कण्ठा विनोदनाय चित्रफलके ।
तं शैलं तां सरितं तट वल्लीसद्म तां चकोराक्षीम ।
कान्दुकखेलनखिन्नां अलिखत् कण्ठे च तां मालाम ॥

नवमालिका कालिन्द्यौ ॥ जनान्तिकम् । सहि मल्लिए !
तस्सिं वसन्तवणुज्जाणो लदाणि जढ़ाहिं अम्होहिं दिट्ठं
तुमं वि चित्तफलए एव्वं लिहिदासि ( ४३ )

---

(४२) तस्या इति । सद्म यान्त्याः मध्ये सखि सखीनां मध्ये सम्भ्रान्त भृङ्गगणवारणकैतवेन अर्द्धं नयनाम्बुजवीक्षितं कटाक्षवीक्षणं यस्यास्तस्या-स्तथाभूतायाः । वल्गित कन्धर मीक्षमाणाया इत्यर्थः । तस्याः कन्न्य-कायाः त्रिकविवर्त्ति यथा तथा विलोकितो । य एक वक्षोजः (वलित कन्धर वीक्षणकाले वीक्षणपार्श्वभिन्न वक्षोजवर्ज्जितैक पार्श्वपरावृत्तेः सम्भवात् त्रिकविवर्त्यैक वक्षोजस्य वीक्षितत्वोक्तिः ) तं स्मरन् सन् उदमनायत उत्सुको बभूव । अभूत तद्भाव विषयात् भृशादिगणीयात् उन्मनः शब्दात् भवत्यर्थे क्यङ् सलोपश्च । छ । भृशादिभ्यो भुव्यच्वे-र्लोपश्च हल इति । ततोऽङित्वात् कर्त्तर्यात्मनेपदे लङि उपसर्गस-मानाकारं पूर्व्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियत-मिति ज्ञापितत्वात् उत्पदस्य पृथक्करणेन मनः शब्दात् प्रागडागमः प्रथम-पुरुषैक वचनम् ।

( ४३ ) शैलेन्द्रो हिमावानयं प्रतितटं विद्याधरै राजित इत्यन्न-प्रकारेणेति भावः ।

मन्दा । ततश्च । तत्सञ्चारसुभगे (४४) तस्मिन्नेवोद्याने कथञ्चित् अतिवाहितदिवसशेषो निरुद्धजनाऽऽसुकवलनकालभुजङ्गयां प्रवृत्तायां शर्वर्यां उदिते च पुरन्दरहरिदङ्गनाश्रवणमौक्तिकताटङ्के भगवति पियूषभानौ दुःसहविरहानलदह्यमानः सखिभ्यां कल्पिते मृणालतल्पे पतिताङ्गः तामेव विद्याधरकन्यामनुस्मरन् असञ्जातनिद्रः कथमपि क्षपार्द्धमक्षपयत् ॥

मारु । ततस्ततः ।

मन्दा । ततश्च ।

अदूरवर्त्तिनश्चन्द्रकान्तघटितस्य क्रीड़ापर्वतस्य शिखरे दत्तकर्णः ।

निद्राविमूकसत्वे (४५) समये तस्मिन् छूताश्रुरश्रौषीत् ।
करुणं कमपि विलापं कर्णायुष्यञ्च धैर्य्यमथनञ्च ॥

मारु । कीदृशः स विलापः ।

मन्दा । हा चूत ! हा चम्पक ! हा लवङ्ग !
हा मल्लि ! हा मालति ! हा कुरङ्गि !
हा हंसि ! हा केकिनि ! हा चकोरि !
स्मर्त्तव्यतामस्मि गता सखी वः ॥ (४६)

---

(४४) तत्सञ्चारसुभगे तस्याः विद्यावसुनन्दमायाः सञ्चारेण सुभगे मनोहरे।

(४५) निद्रया विमूकाः वाग्व्यापारशून्याः सत्वाः जन्तवः यस्मिन् इति विग्रहः। सत्वं द्रव्ये पिशाचादौ व्यवसायस्वभावयोः गुणप्राणबलस्वात्मसत्ता स्वस्त्रीत जन्तुषु इति नानार्थरत्नमाला। कर्णायुष्यं स्वविषयत्वेन मधुरत्वेन वा श्रवणेन्द्रिय तर्पकमित्यर्थः। धैर्य्यमथनं धैर्य्यातिक्रमणत्वात् धार्घ्यलुम्पकमित्यर्थः।

(४६) यः सखी युष्मदुपमेय भूतलत्तद्दयवती सखा कविनेन

अपिच।

देवि ! प्रसूत भुवने ! भगवति ! भक्तानुकम्पिनि ! भवानि !।
अन्यस्मिन् जन्मनि मे भर्त्ता भूयात् स मारुतकुमारः॥ इति

मारु। सकम्पम्। ततस्ततः।

मन्दा। तत् श्रुत्वा च सा झटमुत्थाय सह सखिभ्यामारूढ़ क्रीड़ा पर्वतो ददर्श तामेव कन्याम्।

एकाकिनी सुरभि लम्बितदिव्यमालां
बाष्पायमाणवदनां मदनास्त्रभीताम्।
म्लायन् मृणालसुलितालसकोमलाङ्गीं
बालां लतावलयवेष्टितकण्ठनालाम्॥

अथ झटिति उपसृत्य।

सुन्दरि ! मा मा साहस माचर नन्वेव दासोऽहम्।
अन्यस्मिन् जन्मनि यं प्रार्थयसे भीरु कमितारम्॥

इति वदन्नेव लतावलयं च्छित्वा कण्ठमानयत्।

मारु। सहर्षम्। ततस्ततः।

मन्दा। ततश्च सा।

कन्याविरुद्धमभिसारमवेत्य मुग्धा
गौर्य्याः पुरो व्रत जिहासुरसूनवासम्।
तं वीक्ष्य वेपथु मती नमिताननेन्दुः
व्रीडात् लिलेख चरणाग्रनखेन भूमिम्॥

मारु। ततस्ततः।

---

वयस्या अहं इत्यर्थः। कर्त्तव्यतां कातु योग्यत्वं गता प्राप्ता कथि दुःसहदर्शनं प्राप्नुयत्यस्मि इति भावः।

मन्दा । सबाष्पं निश्वस्य । हन्त कोऽपि नाम दैवमतिवर्त्तेत । यतस्तस्मिन् सम्भ्रमे लतापाशच्छेदव्याघृतादस्य करात् च्युतं चित्रफलकं तत इतःस्खलनक्रमेण अधस्तात्तरुमूले काकतालन्यायेन४६* तत्कालागतस्य सुलभमन्युनाम्नो महर्षेः शिरसि न्यपतत् ।

सर्वे । विषादं नाटयन्ति ।

मारु । निश्वस्य । नष्टानन्तराया उत्सवाः । ततस्ततः ।

मन्दा । ततश्च ।

आबद्धभ्रुकुटीकरालवदनः स मुनि राः दुरात्मन्! कन्याकामुक ! यत्तो रागवसत्त्व(४७)मनागसो मम शिरस्यपीपतत् दारुफलकम् । अतः पत मानुषीं योनिं इयमपि कुलटा प्राप्य मानुषीभावं उपेत्य जन्मान्तरेऽपि प्रथम एव त्वत्सङ्गमे मूर्च्छत्विति अशनिमिव जलदः शापमसृजत् ।

मल्लि । वेपते ।

सर्व्वे । वाष्पं नाटयन्ति ।

---

(४६) * चित्रफलकं कर्त्तृ तत इतःस्खलनक्रमेण अधस्तात् तरुमूले तत्कालागतस्य स्खलनकाले समागतस्य सुलभमन्युनाम्नो महर्षेः शिरसि काकतालन्यायेन काकागमनमिव तालपतनमिवेति समासे काकतालं तद्रूपोन्यायः काकतालन्याय स्तेन न्यपतत् पपातेत्यर्थः । यथा काकागमनसमये तालफलपतनं तथा महर्ष्यागमनसमये तच्छिरसि चित्रफलकपतनमित्यर्थः । तथाच काकागमनसदृशं महर्ष्यागमनं तालफलपतनसदृशं तच्छिरसि चित्रफलकपतनमिति भावः ।

( ४७ ) रागवसत्त्वं अनुरागजन्यवशताभूतं दारुफलकं चित्रफलकमित्यर्थः ।

मार। हन्त मत्तान् प्रमादः। ततस्ततः।

मन्दा। सबाष्पगद्गदं। तत स्तच्छाप दहन दग्धाङ्गाभ्यां ताभ्यां तत्क्षण एव विलिल्ये। (४८)

मार। ततः। इत्यर्द्धोक्ते बाष्पस्तब्धकण्ठस्तूष्णीं भवति।

मन्दा। अथ तौ सखायौ शाप श्रवण भय निमीलिते लोचने कथञ्चित् उन्मीलय।

नाविक्षेतामग्रे प्रियमिव नापि तां कन्याम्।
अपितु स्रस्तं तस्याश्चूडारत्नं तदुत्तरीयञ्च॥

मार। ततस्ततः।

मन्दा। ततश्च। तयो रन्यतरः सुहृत् विरह जायमानं शोकं धारयितुं अपारयन् भगवति कात्यायनि प्रसीद जनान्तरे प्रियसुहृद एवानुचरो भूयासमिति प्रार्थयमानस्तस्यैव केलिपर्वतस्य भृगौ निपत्य सुहृद्गतामेव गतिं प्रयासीत्।

मार। सनिर्वेदं। हन्त सर्वनाशोऽयमुपस्थितः।

कल। सश्लाघं। सौहार्द्दं सदृश माचेष्टितं तेन।

मन्दा। इतरः पुनः सख्यु रार्त्ति दर्शनेनाप्यधिक सञ्जात शोक मन्युस्तं चूडामणिं तच्च सुहृत् प्रतिच्छन्द सुभगं दुकूलं तदपि चित्रफलकं सत्वरं गृहीत्वा धिक् त्वां मूर्ख नृशंस मुनिपाश कथं सर्वेषां नः सङ्घात मृत्युरसीति बाष्परुद्धनयनः पुनःपुन रनिन्दत्।

---

(४८) ताभ्यां कुमारकन्यकाभ्यां विलिल्ये अयनमभाजि इत्यर्थः। लीङ् श्लेषण इति दिवादिगणीयात् धातोर्विपूर्वात् आत्मनेपदिनो भावे लिट्।

मारु । सनिर्वेदं । सेयं अस्मतोऽग्ने धूर्त्तदृष्टिः । ततस्ततः ।

मन्दा । ततश्च । भूयः । प्रकुपितः स मुनिः यतः सुहृत् स्नेहेन राक्षस इव व्याहरसि तेन राक्षस एव भव । अयमेव ते मित्रं मनुर्भवत्विति उत्कीर्ण शापः स्वच्छन्द मगच्छत् ।

मारु । दुर्लङ्घ्यं खलु विधातुर्वैशसं । (४८)

मन्दा । ततश्च तस्मिन्नपि सख्यौ दुकूलादि हस्त एव प्राप्त मुनि शापोचित वपु स्त्रासित सकल भूते जाते यातुधाने । कात्यायनी भवनवर्त्तिनो ध्यायन्नयनं दृष्ट सकला नर्था ।

तत्र हाहेति सम्भ्रान्ता वर्णिनी सा समागमत् ।
गौर्थ्याश्च स्निग्ध मधुरा गगने गौ रजृम्भत ।

मारु । सोत्कण्ठं । कीदृशी सा गीः ।

मन्दा ।

पुत्रीयतो रपत्ये स्यातां मङ्गलयो रिमौ भूमौ
तावितरेतर दत्तौ माला हारौ च सहजौ स्तां ॥(५०)॥

अपिच ।

इतोऽपि सविशेष सौन्दर्य्यशालि विग्रह परिग्रहयो रनयो र्भविता परस्पर वर्द्धमानराग रमणीयः समागमः । सा पुन र्मुनि शाप प्रयुक्ता प्रथमसङ्गमे मूर्च्छा मूर्च्छाहरस्यास्य चूड़ामणेः स्पर्शमात्रेण शाम्यत्विति ।

---

(४८) विधातुः वैशसं दैववैषम्यमित्यर्थः ।
(५०) पुत्रीयतोः पुत्रकामयोरित्यर्थः ।

मारुतः। सहर्षं। हन्त भगवत्यनुग्रहेण स्वतोऽयमजनि विशापः। अथ तयोः सख्योः का प्रवृत्तिः।

मन्दा। पुनश्च सा गौ रुदचलत् योऽयं भृगौ निपतितः। सोऽपि एष इव सविशेष सुन्दर वपुर्विशिष्ट एव जातो भूयाद्देवमेवमेवास्य परमं मित्रं। अन्यः पुनर्यातुधानो भूतः मित्रेणैव शत्रुणा निहतस्ततृक्षण प्रत्यापन्न स्वरूपो भूयात्. भूयोऽपि स्निग्धः सखेति।

कल। दिष्ट्या तावप्यनुगृहीतौ।

मार। भगवति! क्व ते महापुरुषाः किं प्रेयस्या समगमत्तरुणः।

मन्दा। विलोक्य। सहर्षं।

या सा कन्या स्मरजय रमा।

सवाष्पं मल्लिकामालिङ्ग्य। सा पुनर्मल्लिकेयं।

सर्वे विस्मयं नाटयन्ति।

मन्दा। योऽस्याः प्रेम्णः परमसि पदं मारुतस्त्वं स एव॥

नवमालिका रमयन्तिका कालिन्द्यः। सहर्षं। एत्य णो संशयो।

मन्दा। एकं मित्रं कलय कलकण्ठाख्यं।

मार। कलकण्ठमालिङ्ग्य। सखे! दिष्ट्या त्वामस्मिन्नपि जन्मनि पश्यामि।

मन्दा।

अन्यत् पुनस्तं माकन्दं यो रजनिचरतां त्याजितोऽभूत्त्वयैव॥(५१)

(५१) अन्यत् पुनः इतरन्मित्रं तु तं शम्बरक वञ्चकं माकन्दं

मल्लिकामारुत मकरन्दाः मन्दाकिनी च हर्षातिशयेन मूर्च्छन्ति ।

इतराः । सविस्मयं ससम्भ्रमञ्च । हद्धि मुच्छिदा एदे । हन्त सोओ विअ हरिसो वि णिमित्तं एव्व मुच्छाए । ता सीअलेहिं आसासेह्म ।

मल्लिका । सत्वरं प्रबुध्यते ।

नवमा । सहर्षं । कालिन्दि ! सीमन्तमणिप्पहावेण तह णालं णिआ विअ सही मुच्छाए ।

मल्लि । सोत्कण्ठा स्मरणं । हन्त पसुत्तप्पडि बुद्धा विअ अज्ज सव्वं जाणामि तं तं वुत्तन्तं । सहर्षं । अम्महे भअवदि वि सा एव्व । मूर्च्छितान् तान् दृष्ट्वा सावेगं । हद्धि हद्धि किं मुच्छिदा एदे ।

कालिन्दी । मन्दाकिनीं धारयति ।

मल्लि । सहि रमअन्तिए ! तुमंअ कलअण्ठं धारेहि ।

नव । सस्मितं । मल्लिए तुमं वि मारुअं ।

मल्लि । सहर्षं लज्जं । उत्सङ्गेन धारयन्ती मारुतं विलोक्य सवाष्पं स्वगतं । हन्त सिविणआदो आरब्भिअ एत्तिअं समअं महकिदे तह दुव्विसहं मअणसन्दावं अणुभूद वन्तो अज्जउत्तो । सगद्गदं । अज्जउत्त ! उट्ठेहि । तयोऽपि प्रबुध्यन्ते ।

मारु । मल्लिकामालिङ्ग्य । सोच्छ्वासं । अयि मल्लिके !
तथागतं परां काष्ठां प्रेम त्वद्गोचरं प्रिये !

---

कर्ण्ण कलयेत्यनुषङ्गः । यो माकन्दः रजनीचरतां राक्षसत्वं तवैव स्माजितः इति योजना ।

साक्षादनुभूतमिवा भाति प्राग्जन्म स्मरतोऽद्य मे॥

मन्दाकिनीं प्रति। भगवति! अवगीत प्रभावे! (५२) भवतीमपि जानामि तामप्येतामिव व्यवहरन्तीम्।

अपि च।

अवगच्छामि साक्षात् सम्प्रति युष्माभिर्निवेदितं जन्मान्तरीं दृत्तम्।

एतानि पुनर्विशेषतो न मुञ्चन्ति हृदयं॥ (५३)॥

मल्लिकां विलोक्य।

यत् तत् कन्दुक खेलनं भ्रमिचलन्नेत्रांशुनीलाम्बरं
यत्तत्तात नियोगतो मयि मुहुर्दत्तेक्षणं प्रस्थितं।
किञ्चोद्बन्धन साहसे निशि मया छिन्ने लताबन्धने
व्रीड़ा साध्वस हर्ष शंसि वदनं यत्तच्च तन्व्या स्थितं॥(५४)

---

(५२) अवगीत प्रभावे। अवगीतः प्रभावो यस्या इति विग्रहः। पुनः पुनर्दृष्ट प्रभावे इत्यर्थः। मुहुर्दृष्टेऽवगीतं स्यादिति नानार्थरत्नमाला।

(५३) एतानि पुनः अनुपदं वक्ष्यमाणानि तु इत्यर्थः। हृदयं न मुञ्चति।

(५४) अद्यापि हृदयाऽपरित्यागीनि कानि तानीत्यत आह। यत्तदिति भ्रमिषु कन्दुकभ्रमणेषु चलतोः नेत्रयोः अंशुभिः नीलं नीलवर्णं अम्बरं गगनं यस्मिन् कर्म्मणि तद्यथा भवति तथा कन्दुकखेलनमिति यत् तत्। तथा मयि दत्तेक्षणं यथा तथा तात-नियोगतः प्रस्थितं इति यत् तत्। किञ्च निशि रात्रौ उद्बन्धनसाहसे लताबन्धने छिन्ने सति व्रीड़ा साध्वस हर्षशंसि वदनं यस्मिन् कर्म्मणि तद्यथा भवति तथा तन्व्या कत्र्या स्थितमिति यत् तच्च। एतानि पुनर्न मुञ्चति हृदयमिति पूर्व्वेण सम्बन्धः। अथवा भ्रमिचलन्नेत्रांशु-नीलाम्बरं इतीदं कन्दुकखेलनमित्यस्य विशेषणं एवमेव शेषमपि।

मन्दा । वत्स मारुत ! एवं खलु देव्याः कात्यायन्याः गोः । एतदवधिरेव शापजन्मा दोषः । यो हि विस्मृत बीज संस्कारं तिरोधात् ।

सारसिका । स्वगतं । पुढ़म एव्व एसो सव्वो वुत्तन्तो कहिओ मह कस्से भअवदीए ।

कलकण्ठः । ऊर्द्ध्वमवलोक्य सविस्मयं । पश्याश्चर्य्यं ।

किं चन्द्रमा भुव मुपैति विसर्प दंशुः निर्वर्ण्य ।

किं रूढ़पक्ष पटलो रजताद्रि रुच्चैः । पुनर्निर्वर्ण्य ।

ज्ञातं चलध्वज शिखोल्लिखिताम्बुवाहं

श्वेतं विमान मधि सिन्धु सितेव नौका ॥

सर्वे सविस्मयं पश्यन्ति ।

मन्दा । विलोक्य । वत्स कलकण्ठ ! सत्यं विमान मेतत् । पुनर्निर्वर्ण्य । अत्र च अपरिमित परिवारः कोऽपि दिव्यपुरुषः ।

सितातपत्री चलरत्नकुण्डलः

सचापपाणिश्च सुवर्णविग्रहः । स प्रत्यभिज्ञं (५५)

निर्वर्ण्य सानन्दम् । प्रियं नः प्रियं नः ।

सुतां वरं चेच्चितुमुत्सुकः स्वयं

समेति विश्वावसुरेष मे सखा ॥

मल्लि । विलोक्य सहर्षं सवाष्पञ्च । अंमहे तादो आअदो ।

मारु । भगवति ! पश्य माकन्दोऽपि दक्षिणे भागे । सम्भ्रममुत्तिष्ठन्ति ॥

---

(५५) स प्रत्यभिज्ञं साभिज्ञानमित्यर्थः ।

ततः प्रविशति अम्बरयानेन विमानस्थः सह माकन्देन यथोद्दिष्टो विश्वावसुः ।

अवस्ताद्विलोक्य । अप्येतदेव जामातुर्मे मारुतस्य कुसुमपुरस्कन्दनिविष्टं स्कन्धावारपदम् । (५६)

माकन्दः । हस्तेन दर्शयन् । ननु वदामि सख्युर्मे निवासभवनमपेत्तदेवेति निर्वर्ण्य सहर्षम् । एष खलु सह भगवत्या मन्दाकिन्या मल्लिका सखो मारुतः सम्भ्रमविमुक्तासनः सम्भावयत्यत्र भवतः समागममहोत्सवम् ।

विश्वावसुः । तथा ससम्भ्रमं मारुतं विलोक्य सहर्षम् । स्वगतम् । अद्यैव मे प्रसीदति हृदयम् ।

तथाहि । जायते सह कन्याभिः शोकशङ्कुः कुटुम्बिनाम् ।
भज्यते च स्वयं तासां लब्धे सुसदृशे वरे ॥

निर्वर्ण्य सप्रत्यभिज्ञम् ।

स एष दोरन्तरे मुक्ताहारः योहि मया वत्साया मल्लिकायाः कण्ठे स्वयमामुक्तः ।

स्मृत्वा ।

अयं हि । प्रेषितः पुरुहूताय पुरुहूतेन सादरम् ।
विद्याधराधिराजाय तेन मह्यं समर्पितः ॥

---

(५६) स्कन्धावारपदम् । स्कन्धावारस्य सेनायाः पदं स्थानमित्यर्थः । शिविरमिति यावत् । केचित्तु कटकस्कन्धाधारशब्दौ नगरार्थकौ तथैव दृष्टचरौ न पुनः सेनार्थकत्वेनेति । तच्च अत्र कुसुमपुरस्कन्धनिविष्टं स्कन्धावार पदं इत्युक्त्या नगरप्रान्तनिविष्टं नगरमित्यर्थे अस्ताङ्गत्वापातात् किञ्च सेनार्थकत्व मनुमतं पुरुषोत्तमेन । स्कन्धावारः स्यात् कटकः शिविरं बलसंस्थितिरिति ।

माकन्दः । विलोक्य ।

सम्प्रति विमानं संस्पृष्टुं भुवम् । तदवतरतु तत्र भवान् ।

विश्वावसुः । माकन्दं हस्तावलम्ब्य विमानावतारणं नाटयति ।

मन्दा । सहर्षमुपसृत्य । सगद्गदम् । स्वागतं विद्याधरामात्यस्य ।

विश्वावसुः । अये भगवति मन्दाकिनि ! नमोऽस्तु नियमव्याजोपकारनिरतायै भवत्यै ।

मारु । सविनयं प्रणमति ।

विश्वावसुः । सपुलकाभ्यां दोर्भ्यां प्रणमन्तमेव परीरभ्यते ।

परिजनः । काञ्चनासनमुपक्षेपयति ।

विश्ववसुः । उपविशति । मारुतपालकौ माकन्दमालिङ्ग्य ।

सखे ! दिष्ट्या सर्वे वयं सङ्गताः स्मः ।

सर्वे यथोचितमुपविशन्ति ।

मल्लि । सवाष्पमुपसृत्य । हा तात !

विश्वावसुः । वाष्परुद्धनयनः करतलेनालम्ब्य परिरभ्योत्सङ्गेन धारयन् स्तिमितहृदयः क्षणं तूष्णीं भवति ।

मल्लि । पितुः कण्ठलग्ना भवति ।

विश्वावसुः । मल्लिकां निर्वर्ण्य स्वगतम् । अहो ! भगवत्याः कात्यायन्याः प्रसादेन प्रागवस्थातो न हीयते अङ्गानां संस्थानविशेषः । सवात्सल्यातिशयम् ।

(५७) गात्रं शिरीषदलकोमलतास्पदं तद्
वर्णस्तु हेमकदली नवकन्दलश्रीः ।

---

(५७) गात्रमिति । हेमकदल्याः नवकन्दलस्य नूतनाङ्कुरस्य

संरम्भ-कोमल कुहूमधुरःस्वरःस्तः

निर्वर्ण्य। सौगन्ध्यमाक्रमवधीरित पुण्डरीकम्॥

सौमित्र्यं नाटयति।

मल्लिका। पत्रविलज्जमाना चतुष्कादुत्थाय पार्श्वे तिष्ठति।

माध। सानन्दं सानुरागञ्च।

हर्षनिश्चलविलोचनोन्मिषत्

पक्ष्मपालिगलदश्रुमन्थरम्।

मल्लिकां नमयति त्रपावती

फुल्लकोकनदतुल्यमाननम्॥

मल्लि। विश्वावसुं पश्यन्ती सप्रेमम्। स्वगतम्। दुवे सु वि-

तातेस् सरिसो एव्व मह हिअ आवत्ता।

विश्वावसुः। विहस्य। भगवति मन्दाकिनि! अनुग्रहा-

यैव परं तव भवतो महर्षेः सुलभमन्योः शापः। येन पावनो-

ज्ज्वलचरितौ ब्रह्मदत्त विश्वावसू अपि वयमिव अपत्यवतां

धुरमारोपितौ। (५८)

मन्दाकिनी। सश्लाघम्। अति मनोहरमभिहितम्। चतु-

र्णामपि वां परस्पर तुल्यानां सदृशावेव वत्सौ।

विहस्य। देवस्य मारुतस्यैव ब्रह्मदत्तस्य नन्वयम्।

विश्वावसो यथेयं ते तथा विश्वावसोरपि॥

विश्वाव। मल्लिका मारुतौ दृष्ट्वा। सत्यं मन्यते।

---

श्रीरिव श्रीः शोभेव शोभा यस्य इति विग्रहः कन्दवन्तु नवाङ्कुरे इति नानार्थरत्नमाला।

(५८) येन शापेन अपत्यवतां प्रमुखापत्यशालिनामित्यर्थः। प्रशंसायां सप्तमी।

रमयन्तिका नवमालिका कालिन्द्यः । परस्परं अमात्तिकम् । अम्हे भअवदीए मन्दाइणीए पहावो । पुढमं संवरअस्स वअणम् तह तह कुणन्तीए वि महाणंदजणणं एक्कं णिव्वूढं पअरणम् । अह उण कहा कहणिए पंसी पवन्नो दंसिओ ।

विश्वावसुः । परिक्रम्य रमयन्तिकादीन्विलोक्य । भगवति ! का पुनरेताः ।

मल्लि । शनैः पितुः साध्वावलम्बिनी कर्णे । एदाओ सव्वाओ मह पिअसहीओ । पृथक् पृथक् निर्दिश्य । एसा मह सव्वंसु कोसलणादो आरहिअ अप्प णिव्विसेसा पिअसही णोमालिआ णाम ।

विश्वावसुः । स्वयमपि शनैरेव । अपरे पुनः के ।

मल्लि । एदाओ भअवदीए मन्दाइणीए सारसिआ कालिन्दीओ णाम महाभाआओ अन्ते वासिणीओ ।

विश्वावसुः । वत्से ! अन्यामपि कथय ।

मल्लि । एसा अमच्च विहुराअ उत्तिया रमअन्तिआ णाम पिय सहस्स कलअण्ठस्स वल्लहा ।

विश्वावसुः । सबहुमानम् । स्वगतम् । कथितं तत्प्रणीतआकन्देन युज्यत एसा विशुद्धोदाररूपा अव्याकृतपरपाभिजात्या कलकण्ठस्य ।

प्रकाशम् । सबहुमानः वत्से ! कस्य प्रियसखः कलकण्ठः ।

मल्लि । सलज्जमपवारयति ।

विश्वावसुः । सानन्दम् ।

कल्याणीश्चिरकाङ्क्षितां समुलभां दृष्ट्वा। परस्परं सनाभि-
बन्धुर्श्चैव तथैव बान्धव इमे जम्मदयावाद्दिते सम्यग् संवर-
प्रियम् मे कलकण्ठ एष दयितासङ्गेन सम्पद्यते
नावन्द्यं पुनरप्यवैमि सुहृदं किं मेऽस्वतोऽपि प्रियम् ॥

तथापीदमस्तु भरतवाक्यम्।

भद्रं भजन्तु विश्वे भक्तिर्विष्णौ नृणां शिवे वास्तु।
धर्मे रमन्तु भूपाः श्रीमन्तः सन्तु विद्वांसः ॥

इति निष्क्रान्ताः सर्वे।

इति श्रीमदुद्दण्डकवीन्द्रकृते मल्लिकामारुते प्रकरणरत्ने
दशमोऽङ्कः समाप्तः।

उद्दण्ड रङ्गनाथः सुत मलभत यं रङ्गदेवी तथाम्बा
त्वं विद्येशो महर्षिर्निरवधि महिमा वहति मासरूकः।
तस्य श्रीविक्रमाख्या वहुमतिरचिते मल्लिकामारुतेऽस्मिन्
मूर्धन्योऽगात् नवानां(५९)प्रकरणतिलके निष्कलङ्कोऽयमङ्कः॥

---

(५९) नवानां मूर्धन्यः दशम इत्यर्थः।

(६०) प्रकरण तिलके प्रकरण श्रेष्ठे इत्यर्थः।

पण्डितकुलतिलकस्य बि, ए, उपाधिधारिणः श्रीजीवानन्दविद्या-
सागरभट्टाचार्य्यस्य आज्ञया श्रीमद्रङ्गनाथ कविना विरचिते
श्रीमदुद्दण्डकवीन्द्रकृतमल्लिकामारुतव्याख्याने
परिमलाख्याने दशमोऽङ्कः
समाप्तः।

